# ज्ञाने धर्मः उत प्रयोगे ?

चमू कृष्ण शास्त्री

संस्कृतभारती

देहली

**प्रकाशनम्**

**संस्कृतभारती**
माता मन्दिर गली, झण्डेवाला
नई दिल्ली - ११० ०५५.



*प्रथममुद्रणम्* - १०,००० प्रतिकृतयः
*युगाब्दः* ५१०१ (१९९९ - २०००)

*मूल्यम्* - रू. १२/-

*मुद्रणम्* -
**ग्राफिक वर्ल्ड**
१६८६, कुचा दखनि राय
दरिया गंज, नई दिल्ली - ६

**JNANE DHARMAH UTA PRAYOGE**
Written by **Chamu Krishna Shastry**
**Publisher** - *Samskrita Bharati, Mata Mandir Gali, Jhandewala, New Delhi - 110 055.*
**Tel. & Fax** -- 011- 3517689.
**Pages** - 6 + 58 Price -- Rs 12/- First Print - Sept 1999.
**Printed at** -- *Graphic World, 1686, Kucha Dakhani Rai Dariya Ganj, New Delhi - 6.*

श्रीः



कं॰ वें॰ रामकृष्णमाचार्यः
व्याकरण-प्राध्यापकः,
भूतपूर्व-कुलसचिवः
राष्ट्रिय-संस्कृत-विद्यापीठम्,
तिरुपति - ५१७ ५०१.

# उपोद्घातः

संस्कृतसम्भाषणान्दोलनसूत्रधारेण रचितस्य, सम्भाषणस्य महत्त्वं प्रतिपादयितुम् उद्दिष्टस्य अस्य प्रस्तुतीकरणाय उद्युक्तोऽहं न जाने योग्यताम् आत्मनः । यतः केनापि संस्कृतज्ञेन स्वप्नेऽपि अचिन्तितं महत् संस्कृतसम्भाषणान्दोलनं केनचित् सामान्येन आरब्धम् । आसन्नविंशेभ्यः वर्षेभ्यः राज्यस्तरे आरब्धमिदम् आन्दोलनं, क्रमशः राष्ट्रस्तरे, विश्वस्तरे च स्वीयं विश्वरूपं सन्दर्शयति । स एव सामान्यः इदानीं सम्मान्यः जातः । ये चास्य गुरवः ते सर्वेऽपि अस्य शिष्यकल्पाः जाताः । दृढः सङ्कल्पः, तत्परायणता च अस्ति चेत् किमपि साधयितुं शक्यमिति हि निरूप्यते खलु सक्रियेण, सम्भाषणान्दोलननिर्वाहपटुना अनेन युवगणेन ।

अस्य वर्षस्य संस्कृतवर्षत्वेन उद्घोषणस्य पृष्ठभूमिः यदि परिशील्यते तर्हि विंशतेः वर्षेभ्यः विहितस्यैव प्रयासस्य फलमिदमिति सुस्पष्टं भवति । लक्षशः जनाः संस्कृतं प्रति अनुरागिणः अनेन आन्दोलनेन कृताः, क्रियमाणाः, करिष्यमाणाश्च सन्ति इति तु सर्वविदितः विषयः ।

एतदेकं सौभाग्यम् अस्य आन्दोलनस्य यत् महामहोपाध्यायाः

प्रतिष्ठिताः बहवः संस्कृतज्ञाः अस्य आन्दोलनस्य कृते अनुकूलाः । अस्मिन्नेव पुस्तके कस्यचित् संस्कृतज्ञस्य वृद्धस्य विचारः उल्लिखितः यः स्वयम् उक्तवान् - इतः परं संस्कृतविषये निश्चिन्तोऽस्मीति । वस्तुतः अयमेव प्रायः समेषां संस्कृतज्ञानां अभिप्रायः । अनेनैव आन्दोलनेन बहवः संस्कृताध्ययने उत्सुकाः जाताः जायन्ते च । न केवलम् एतत् । संस्कृतस्य विषये याः दुरवगाहनाः सन्ति प्रायस्ताः सर्वाः नष्टाः । प्रायः सर्वेष्वपि भारतीयेषु संस्कृतं प्रति औन्मुख्यम् इदानीं दृश्यते । पाठशालास्तरमारभ्य यत्र यत्र संस्कृतम् अध्यापनविषयः अस्ति, व्यवस्था च अस्ति, तत्र सर्वत्र बहवः संस्कृतम् अध्येतुम् अहमहमिकया आयान्ति । परन्तु एतादृशं संस्कृतस्य अनुकूलं वातावरणं संरक्षयितुं वर्धयितुं च अपेक्षिता सक्रियता संस्कृतज्ञेषु न दृश्यते इति तु चिन्तायाः विषयः ।

संस्कृतस्य संस्कृतमाध्यमेन पाठनं विना संस्कृतस्य संस्कृतज्ञस्य च भावी कालः उज्ज्वलः भवितुं नार्हति । किञ्च संस्कृतस्य संस्कृत-माध्यमेन पाठनं, अन्यभाषामाध्यमात् सुलभतरम् । तत्रापि विशिष्य शास्त्राणाम् अध्यापनं संस्कृतमाध्यमेनैव सुलभतरमिति मदीयः अनुभवः । तथैव किञ्चिद् अत्र प्रकाशयितुम् इच्छामि ।

महदिदं मे भागधेयं मन्ये यत् माध्यमिकस्तरादारभ्य स्नातकोत्तरस्तरं यावत् विविधेषु स्तरेषु संस्कृतमध्यापयितुं मया अवसरः लब्धः । एतावता चतुस्त्रिंशतः वर्षाणाम् अध्यापनानुभवं प्राप्तवता मया संस्कृतस्य शास्त्राणां च अध्ययनं मातृभाषामाध्यमेनैव कृतम् । अध्यापनमपि माध्यमिकस्तरमारभ्य स्नातकोत्तरस्तरपर्यन्तम् आदौ नवसु वर्षेषु राज्यभाषामाध्यमेनैव कृतम् । ततः तिरुपतिस्थं केन्द्रीयसंस्कृतविद्यापीठं प्रविष्टेन मया संस्कृतस्य शास्त्राणां तथा शिक्षणक्षेत्रसम्बन्धिनाम् आधुनिकविषयाणां च संस्कृतमाध्यमेनैव अध्यापनं निर्बन्धेन करणीयमापतितम् । तदारभ्य अद्य यावत् मया पञ्चविंशतिः वर्षाणि संस्कृतमाध्यमेन संस्कृतं व्याकरणं तथा अन्यान् अपि विषयान् अध्यापयता अतिवाहितानि । अनेन सुदीर्घेण संस्कृताध्यापनाभ्यासेन संस्कृतमेव

मातृभाषा जाता इति कथने नातिशयोक्तिः । कदाचित् कश्चित् मां स्वमातृभाषामाध्यमेन संस्कृतमध्यापयितुं प्रार्थयते, तदा अन्यभाषामाध्यमेन संस्कृताध्यापने तादृशी निरर्गलता नानुभूयते । कृत्रिमता अपि अनुभूयते ।

न केवलम् अयं ममैव अनुभवः अपि तु विद्यापीठेषु कार्यं कुर्वताम् समेषाम् अनुभवः । छात्राः अपि संस्कृतमाध्यमेन अध्यापिताः तदेव माध्यमम् इच्छन्ति । तेनैव माध्यमेन सम्यगवगच्छन्ति च ।

संस्कृतमाध्यमेन अध्यापनेन संस्कृतज्ञानं, शास्त्रज्ञानं वा न भवति, तच्च कठिनम् इत्यादि प्रवादास्तु मिथ्यालापाः एव । परन्तु आदौ अध्यापकस्य तदर्थं कश्चित् परिश्रमः आवश्यकः । तत्र अलसाः एव तथा प्रचारं कुर्वन्ति ।

संस्कृतभाषया पुनः पूर्वतनवैभवं प्राप्तव्यं चेत् संस्कृतज्ञैः संस्कृतानुरागिभिश्च तदनुकूलाः प्रयासाः विधेयाः । तत्र प्रथमः संस्कृतेन सम्भाषणम् । प्रतिदिनं कश्चन समयः तदर्थं विनियोक्तव्यः । अथ संस्कृतज्ञेन सता संस्कृतमाध्यमेन अध्यापनव्रतं स्वीकरणीयम्, तथा संस्कृते वर्तमानानां शास्त्रीयविचाराणां सरलसंस्कृतेन अभिव्यक्त्यै प्रयासः कर्तव्यः येन अन्यक्षेत्रेषु कार्यं कुर्वाणाः सरलसंस्कृतज्ञानमात्रेण तान् विचारान् जानीयुः ।

अस्मिन् आधुनिके वैज्ञानिके युगे ऐहिकफलदायिन्याः विद्याया एव आदरः दृश्यते । अतः संस्कृतस्यापि ऐहिकफलसाधकत्वं व्यवस्थापनीयम् । वस्तुतः संस्कृते आधुनिकविज्ञानोपयुक्ताः अनेके विषयाः सन्ति । परन्तु तेषाम् आधुनिकवैज्ञानिकसिद्धान्तैः सह तोलयित्वा समाजोपयुक्ततां प्रकाशयितुं समर्थः गणः नास्ति । यतः संस्कृतच्छात्राः आधुनिकं विज्ञानं न जानन्ति । आधुनिकविज्ञानच्छात्राः संस्कृतं न जानन्ति । अतः इदानीमस्माभिः तादृशः कश्चिद् गणः निर्मातव्यः यः उभयत्र समर्थः स्यात् ।

कथमेतत् शक्यम् ? अत्र द्वयीगतिः । तत्र प्रथमः मार्गः विश्वविद्यालयेषु कस्मिंश्चिदपि विभागे अधीयानः समकालमेव संस्कृतमपि अध्येतुं यथा शक्नुयात् तथा संस्कृतविभागेषु व्यवस्था । द्वितीयः मार्गः

संस्कृतविश्वविद्यालयेषु शास्त्राध्यापनेन सह आधुनिकविज्ञानस्य अध्यापनम् । अथवा कलाशालासु विश्वविद्यालयेषु च अधीयानानां संस्कृतम् अध्येतुं समुत्सुकानां छात्राणां कृते समकालमेव संस्कृताध्ययनाय संस्कृतकलाशालासु संस्कृतविश्वविद्यालयेषु च व्यवस्था । अनया दृष्ट्या तत्र प्रयासाः अल्पशः आरब्धाः फलप्रदा इव दृश्यन्ते ।

अस्मिंश्च संस्कृतवर्षे अस्माभिः सर्वैरपि संस्कृतज्ञैः सर्वेषु लौकिकेषु क्षेत्रेषु संस्कृतस्य प्रवेशः प्रभावश्च यथा स्यात् तथा प्रयतनीयम् । एष सुवर्णावकाशः निरर्थकः यथा न भवेत् तथा प्रयत्नः विधेयः ।

आदौ सर्वोऽपि संस्कृतज्ञः, संस्कृताध्यापको वा संस्कृस्य विषये वर्तमानानां दुर्भावनानाम् अपमार्जनाय प्रयासं कुर्यात् । प्रथमं स्वमनसि वर्तमानानां सन्देहानां निवारणं तेन अवश्यं कर्तव्यम् ।

अस्य पुस्तकस्य रचनायाम् इदमेव मुख्यमुद्देश्यं यत् संस्कृतज्ञानां मनसि जायमानानाम् अनेकेषां सन्देहानां निवारणम् । तदर्थमेव अपेक्षिताः सर्वे विषयाः सयुक्ति प्रमाणवचनैः सह सम्यगत्र प्रतिपादिताः । चि. कृष्णशास्त्रिणा स्वीयस्य सर्वस्यापि अनुभवस्य समूर्तं चित्रणम् अस्मिन् कृतमस्ति । तस्य महानुभावस्य यः प्रयासः स अस्माभिः सफलीकरणीयः ।

अन्ते चेदमेव निवेदनीयम् अवशिष्यते यत् समे संस्कृतज्ञाः अस्मिन् अनुकूले अवसरे संस्कृतमातुः सेवायै कटिबद्धाः भवन्तु । चि. कृष्णशास्त्री एवमेव चिरकालं भगवतः प्रसादेन दुस्साध्यान् सुसाध्यान् विदधातु इति ।

*जयतु संस्कृतम्, जयतु संस्कृतिः*

**प्रमादि- आषाढ- शुक्ल, दशमी तिथिः** इत्थं निवेदयिता
**सोमवासरः २०-०९-१९९९** **कं.वें. रामकृष्णमाचार्यः**

# ज्ञाने धर्मः उत प्रयोगे ?

कश्चन ग्रामः । ग्रामसमीपे महद् वनम् आसीत् । तस्माद् वनाद् यदा-कदाऽपि सिंहगर्जनं श्रूयते स्म । तस्मात् जनाः जानन्ति स्म यद् वने सिंहः वसति इति । कञ्चित् कालं यावत् सिंहगर्जनं न श्रुतम् । तदा जनाः चिन्तितवन्तः प्रायशः सिंहः कुत्राऽपि गतवान् इति । परन्तु अनन्तरकाले कदापि सिंहस्य गर्जनमेव न श्रुतम् तदा जनाः निर्णीतवन्तः सिंहः मृतः इति । एवमेव बहोः कालात् संस्कृतसिंहानां गर्जनमेव न श्रुतम् इति कारणतः अद्य संस्कृतविषये अपि 'संस्कृतं निर्जीवम्' इति आक्षेपः श्रूयते ।

## किं संस्कृतं व्यवहारभाषा आसीत् ?

पूर्वं संस्कृतं कदापि व्यवहारभाषा न आसीत् इति कथयितारः तत्र तत्र विरलतया केचन लभ्यन्ते । पक्षे विपक्षे च समर्थनाय बहवः अंशाः स्युः । वयं तु संस्कृतं व्यवहारभाषा आसीद् इत्येव मन्यामहे । न केवलम् अभिमानेन तथा चिन्तयामः, अपितु वास्तविकानि तथ्यानि अपि तदेव सत्यं प्रमाणयन्ति ।

## पतञ्जलिकाले

व्याकरणमहाभाष्ये प्रथमाह्निके पतञ्जलिः 'संस्कृतं सर्वेषु प्रदेशेषु अपि व्यवहारे आसीत्' इति वदन् केचन शब्दाः तावत् तत्तत्प्रदेशे एव आधिक्येन प्रचारे आसन् इति स्पष्टं निर्दिशति- 'एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दाः तत्र तत्र नियतविषयाः दृश्यन्ते । तद्यथा - शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु, रंहतिः प्राच्यमध्येषु, गमिमेव तु आर्याः प्रयुञ्जते ।' 'दातिर्लवनार्थे प्राच्येषु, दात्रम् उदीच्येषु ।' 'गच्छति' इति वक्तुं कम्बोजाः 'शवति' इति वदन्ति स्म सौराष्ट्राः 'हम्मति' इति प्राच्यमध्याः 'रंहति' इति च प्रयोगं कुर्वन्ति स्म ।

## भाषिता भाषा

केवलं भाषितभाषासु पर्यायशब्दाः तत्तत्प्रदेशे रूढाः भवन्ति, न तु ग्रान्थिकभाषायाम् । किञ्च 'कम्बोजेष्वेव भाषितो भवति' इति वाक्ये पतञ्जलिः 'भाषितो भवति' इति प्रयुक्तवान् (भाष् = व्यक्तायां वाचि) न तु पठितो भवति, लिखितो भवतीति वा ।

तत्रैव व्याकरणमित्यस्य व्याख्या 'प्रयुक्तानाम् इदम् अन्वाख्यानम्' इति कृता । अत्र प्रयुक्तानाम् इति शब्दः अवधातव्यः । लोके भाषया ये व्यवहाराः क्रियन्ते स्म तान् अधीत्य नियमाः रचिताः, तथा व्याकरणं संवर्धितं च । अतः प्रथमं व्यवहारः आसीत्, पश्चात् व्याकरणम् आगतम् । महर्षिणा पतञ्जलिना 'अजेर्व्यघञपोः (२-४-५६) इति सूत्रव्याख्यानसन्दर्भे दर्शितम् उदाहरणं परिशीलयतु । कस्यचित् वैयाकरणस्य, शकटचालकस्य (शाकटिकस्य) च मध्ये मार्गे जातः संवादः एतेन प्रकारेण महाभाष्ये वर्णितः अस्ति -

वैयाकरण आह - कोऽस्य रथस्य प्रवेता इति ? (प्रवेता = चालकः)

सूत आह - आयुष्मन् ! अहं प्राजिता । (प्राजिता = चालकः)

वैयाकरण आह - अपशब्द इति ।

सूत आह - प्राप्तिज्ञो देवानां प्रियः, न तु इष्टिज्ञः, इष्यते एतद्रूपम् । (मूर्ख, भवान् सूत्रार्थं केवलं जानाति, सूत्रकारस्य अन्तरंङ्गं न, प्राजिता इति रूपं सम्यगेव अस्ति)

वैयाकरण आह - अहो खलु अनेन दुरुतेन बाध्यामहे । (अहो, एतस्मात् दुष्टसूतात् कियन्तः अवरोधाः)

सूत आह - न खलु वेञ्सूतः सुवतेरेव सूतः ! यदि सुवतेः कुत्सा प्रयोक्तव्या दुःसूतेन इति वक्तव्यम् । (वेञ् धातुतः सूत इति रूपनिष्पत्तिः न भवति । षूञ् धातोः रूपं तत् । अतः दुष्टसूतः इति वक्तुं दुःसूत इति वक्तव्यं-दुरुत इति न)

अष्टाध्याय्यां भगवान् पाणिनिः च्छन्दसि भाषायाञ्च इति द्विधा विभज्य शब्दानाम् अन्वाख्यानं कृतवान् । तत्र भाषा शब्दः लौकिकभाषाम् एव बोधयति । लौकिकी इत्यस्य च व्यावहारिकी इत्येवार्थः । भाष्यकारः वदति- अथ शब्दानुशासनम् । केषां शब्दानाम् ! लौकिकानां वैदिकानां च इति । अत्र लौकिकानां वैदिकेभ्यः पृथगुक्तेः लौकिकाः शब्दाः भाषाशब्दा एव । व्याकरणाध्ययनप्रयोजनजिज्ञासायाः उपपत्तिं प्रदर्शयता अनेन भाष्येण अपि एतत् स्पष्टं भवति - वेदान्नो वैदिकाः शब्दाः, सिद्धा लोकाच्च लौकिकाः, अनर्थकं व्याकरणमिति । एवं विप्रतिपबुद्धिभ्यः अध्येतृभ्यः आचार्यः इदं शास्त्रमन्वाचष्टे - इमानि प्रयोजनानि अध्येयं व्याकरणम् इति । अनेन च स्पष्टं यत् पतञ्जलिकालेऽपि संस्कृतं व्यवह्रियमाणम् आसीत् । ऊष, तेर, चक्र, पेच इति शब्दचतुष्टयस्थाने इदानीम् उषितवन्तः, तीर्णाः, कृतवन्तः, पक्वन्तः इति शब्दाः प्रयुज्यन्ते इति कथयन् भाष्यकारः संस्कृस्य भाषितभाषात्वं निरूपयति । एतादृशाः सन्दर्भाः महाभाष्ये अनुपदं सन्ति । लौकिकत्वं लोकविदितत्वम् इति व्याख्याय कैयटः अपि संस्कृतस्य व्यावहारिकत्वं समर्थयति ।

## भाषितभाषासु एव दृश्यमानाः शब्दाः

### अ) कृषिसम्बन्धिनः

लूनयवम् = केदारे कर्तनसमयः, खलेयवम् = यस्मिन् काले खले धान्यं भवति सः कालः । खलेबुसम् = खलतः धान्यनयनानन्तरं खले यदा बुसम् भवति सः कालः । वहद्गु = कर्षणकालः (वहन्ति हलं गावः = बलीवर्दाः यस्मिन् काले सः) तिष्ठद्गु = दुग्धदोहनकालः (तिष्ठन्ति गावः दोहनार्थं यस्मिन् काले सः) इत्येवम् एते शब्दाः सामान्यानां जनानां तत्रापि कृषीवलानां परस्परं व्यवहाराय सीमिताः शब्दाः, कृषीवल-संवादमात्रगोचराः च सन्ति । आयान्ति गावो गृहं यस्मिन् काले स आयतीगवं कालविशेषः ।

अपण्डितेषु कृषीवलेषु एते विलक्षणाः शब्दाः ये प्रसिद्धाः आसन् ते पश्चात् रूढिवशात् शिष्टैरपि परिगृहीताः अभवन् । एवमेव शलाकापरि, एकपरि इत्यादयः द्यूतकारैः धूर्तैः प्रयुज्यमानाः शब्दाः पाणिना साधुत्वेन अन्वाख्याताः । अतः एव 'कितवव्यवहारे च' इति वार्तिकं प्रवृत्तम् । तेन ज्ञायते यत् तादृशानां मध्ये अपि संस्कृतभाषा व्यवहारे आसीत् इति । उन्मत्तगङ्गं नाम देशः, यत्र गङ्गा उन्मत्ता प्रवहति । लोहितगङ्गं, शनैर्गङ्गम् इत्यादयः देशवाचिनः शब्दाः व्यवहारमात्रगोचराः । 'धान्यानां भवने क्षेत्रे खञ्' (५-२-१) मौद्गीनं क्षेत्रम्, व्रैहेयम्, तिल्यम्, तैलिनम् इत्यादयः शब्दाः कृषिव्यवहाराय अपेक्षिताः । मासं भृतः = (वेतनेन क्रीतः मासिकः कर्मकरः), षष्टिरात्रेण पच्यमानाः षष्टिकाः (धान्यविशेषाः) इक्षूणां क्षेत्रम् इक्षुशाकटम्, इक्षुशाकिनम् । आश्वीनः अध्वा = अश्वेन एकाहेन गन्तुं शक्यः मार्गः । द्वितीयाकरोति = द्वितीयं कर्षणं करोति । तृतीयाकरोति = तृतीयं कर्षणं करोति । शम्बाकरोति = शम्ब शब्दः प्रतिलोमे; अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षति । बीजाकरोति = बीजेन सह कर्षति इत्यादयः ग्राम्यजनेषु प्रसिद्धाः ।

**आ) यौगिकाः रूढाः सञ्जाताः ।**

यौगिका (व्युत्पन्नाः) अपि शब्दाः दीर्घकालं यावत् प्रयोगकारणतः यौगिकत्वं परित्यजन्ति । गवां बन्धनस्थानं गोष्ठम् । तस्मिन् अर्थे व्यवहारे आरब्धे कालक्रमेण गोष्ठशब्दः गवां सम्बन्धं परित्यज्य केवलं 'बन्धनस्थानम्' इत्यर्थे प्रयुक्तः । अतः गोविशेषप्रतिपत्त्यर्थं गोगोष्ठम् अविगोष्ठम् (मेषगोष्ठम्) महिषीगोष्ठम् इत्यादयः शब्दाः व्यवहारपथम् आगताः । तेषां साधुत्वस्य अन्वाख्यानाय 'गोष्ठादयः स्थानादिषु पशुनामभ्यः' इति वार्तिकेन गोष्ठप्रत्ययः सूचितः । कृषीवलैः कर्षणाय गवोः युगं नियुज्यते स्म । ततः गोयुगशब्दः रूढ्या दीर्घेण कालेन केवलं युगमित्यर्थे पर्यवसन्नः । गोशब्दार्थः परित्यक्तः । अत एव उष्ट्रगोयुगं, खरगोयुगम् इत्यादयः शब्दाः अभवन् । षण्णां गवां समाहारः षड्गवम् । कालेन च गोपदार्थः परित्यक्तः, षण्णां समुदायः षड्गवम् इत्यर्थः स्वीकृतः ।

षड् हस्तिनः इत्यर्थे हस्तिड्गवम्, षड् अश्वाः इत्यर्थे अश्वषड्गवम् इत्यादयः प्रयोगाः रूढिमागताः । तिलस्य विकारः तैलम् । तिलतैलम् इति पुनरुक्तं भवति । एरण्डतैलम्, इङ्गुदीतैलम् इति च दुरुक्तम् । परं वार्तिककारेण 'स्नेहने तैलच्' इति तैलच्प्रत्ययेन सामञ्जस्यं सम्पादितम् । तथैव 'वाचालः' 'वाचाटः' इति शब्दयोः 'अधिकभाषणशीलः' इति अर्थः आसीत् । कालान्तरे 'असमीचीन-बहुभाषी' इत्यर्थः आपन्नः । अत एव 'कुत्सिते इति वक्तव्यम्' इति वार्तिकं निर्मितम् । एवं शब्दानाम् अर्थपरिवर्तनं व्यावहारिकभाषासु एव भवति ।

### गृह-सम्बद्धाः

पात्रेसमितः = केवलं भोजनसमये उपस्थितः भवति । एवमेव पात्रेबहुलः । सतृणमत्ति = स्वल्पमपि अपरित्यज्य भोजनकर्ता । गेहेनर्दी = गृहे केवलं पौरुषस्य दर्शयिता । आखनिकबकः = धनार्जनम् अकुर्वन् आत्मीयगृहेषु भक्षयिता । तीर्थकाकः = सर्वान् विद्यालयान् दृष्ट्वा आगतः, निर्विद्यः । गर्भेतृप्तः = आजन्म दरिद्रः । गेहेविचिती = गृहे एव दोषान्वेषी= अलसः । स्नात्वाकालकः = स्नात्वापि मलिनः । गेहेमेही = यः गृहे एव तिष्ठति, कार्यार्थं बहिः न गच्छति । कर्णेटिरिटिरा, कर्णेचुरुचुरा = निरर्थकं कर्णे जल्पनम् । पिण्डीशूरः = भोजने शूरः । मातरिपुरुषः = गृहे मातुः सम्मुखे साहसी, कार्ये असमर्थः । एवमेव पितरिपुरुषः, गेहेशूरः इत्यादयः । शाकादिकं विक्रेतुं मार्गे गच्छन्तं वाणिजं काचित् गृहिणी यद् आह्वयति तद् आह्वानम् उच्यते 'एहिवाणिजा' । कलहायमानः वाणिजः निष्कास्यते सा क्रिया 'अपेहिवाणिजा' । चेलं (वस्त्रम्) आहर इति वचनम् 'आहरचेला' । भोजनसन्दर्भे आतिथेयः अतिथिम् उद्दिश्य 'अश्नीत पिबत' इति यत् वदति सा क्रिया 'अश्नीतपिबता' । एवमेव पचतभृज्जता, खादतमोदता च ।

### इ) सामान्यव्यवहारः

कूपमण्डूकः इत्यर्थे एव उदुम्बरकृमिः, कूपकच्छपः, अवटकच्छपः, कुम्भमण्डूकः, उदपानमण्डूकः इत्यादयः । नगरकाकः = परेषां वञ्चने

निपुणः (नगरवायसः) । अविनीतः धृष्टः च कथ्यते नगरश्वा । नग्नमुषितः = यस्य सर्वस्वं गतं सः । कुमारीपुत्रकः, कुमारीश्वशुरकः = कन्यायां यः पुत्रः अविनीतम् आचरति तस्य पुत्रस्य पिता (पुत्रस्य दुश्चेष्टितेन अनुभूयमानलज्जः)

## ई) वाणिज्यम्

द्विगुणिकः = द्विगुणितस्य धनस्य प्राप्त्यर्थं यः ऋणं ददाति सः । एवमेव त्रैगुणिकः । वारिपथिकम् = जलमार्गेण आगतानि वस्तूनि । कुसीदिकः = कुसीदं वृद्धिः, तदर्थं द्रव्यं कुसीदं, तत्प्रयच्छति । कुसीदिकी । शैत्येन शीकारं करोति = शीकायते ।

## उ) लोकव्यवहारः

'बहुषु बहुवचनम्' (१-४-२१) इति सूत्रव्याख्यानसन्दर्भे 'दृश्यते खलु विप्रयोगः । (विप्रयोगः = विरुद्धः प्रयोगः) तद्यथा - 'अक्षीणि मे दर्शनीयानि, पादाः मे सुकुमाराः' इति । (मे अक्षीणि मे पादाः इति लोके विरुद्धः प्रयोगः (द्विवचनस्य स्थाने बहुवचनस्य प्रयोगः) दृष्टः इति भाष्यकारः कथयति । एतादृशाः दोषयुक्ताः प्रयोगाः एव संस्कृतस्य व्यावहारिकत्वं गमयन्ति । 'अक्षीणि मे' इत्यादीनाम् असाधुत्व-प्रतिपादनमन्यत् ।

'दूराद्धूते च' (८-२-८४) 'हैहेप्रयोगे हैहयोः' (८-२-८५) 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्यापि प्राचाम्' (८-२-८६) इति त्रिभिः सूत्रैः दर्श्यमानानि उदाहरणानि संस्कृतभाषायाः व्यावहारिकत्वं दर्शयन्ति । आगच्छ भो माणवक यज्ञदत्त ३ इति यत्र दूरात् आह्वानम्, है ३ देवदत्त हे३देवदत्त दे३वदत्त, देवद३त्त, देवदत्त३ इत्यादीनि वाक्यानि एव लोके व्यवह्रियमाणानि । इतरव्यावहारिकभाषासु अपि दूरतः आह्वानसमये प्लुतः भवति इति वयम् अनुभवामः । लोके त्रिमात्रात् अधिकमात्रः स्वरः अपि प्रयुज्यते । तदनुसारमेव बोपदेवः 'आवत् स्वर्घप्लु' इति मुग्धबोधसूत्रवृत्तौ 'त्रिमात्रस्तु प्लुतो ज्ञेयः' इति शिक्षावाक्यमभिलक्ष्य त्रिमात्रपदं बहुमात्रोपलक्षकम् इति उक्तवान् ।

एतेन एव प्रकारेण 'चौर चौर ३ घातयिष्यामि त्वाम्' इति उदाहरणविषयकम् 'आम्रेडितं भर्त्सने' (८-२-९५) इति सूत्रम् 'अङ्ग कूज ३ इदानीं ज्ञास्यसि जाल्म' इति उदाहरणविषयकम् 'अङ्गयुक्तं तिङाकाङ्क्षं' (८-२-९६) इति सूत्रञ्च दैनन्दिनव्यवहारम् अभिलक्ष्य प्रवृत्तम् इति ज्ञातव्यम्

एवमेव असूया-सम्मति-कोप-कुत्सनेषु 'कन्ये ३ कन्ये' ' माणवक ३ माणवक' इत्यादौ आचारोल्लङ्घने 'स्वयमोदनं भुङ्क्ते ३ उपाध्यायं सक्तून् पाययति' इत्यादौ, प्रैषणे 'यवान् लुनीहि ३ सक्तूंश्च पिब' इत्यादौ च प्लुतविधानं भाषायाः व्यावहारिकत्वे प्रमाणम् ।

## ऊ) परिहास-सन्दर्भे

'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' इति सूत्रेण मध्यमोत्तम-पुरुषयोः व्यत्ययं, द्वित्वबहुत्वयोः एकवचनं च आचार्यः शास्ति । 'एहि मन्ये ओदनं भोक्ष्यसे इति, न हि भोक्ष्यसे भुक्तः स अतिथिभिः' 'एहि मन्ये रथेन यास्यसि, न हि यास्यसि यातस्तेन ते पिता' इत्यादीनि उदाहरण-वाक्यानि जामातरं प्रति श्यालकादेः परिहासवचनानि । एतादृशः परिहासः व्यवहारे एव सम्भवति, न तु शास्त्रेषु । अपि च इतरासु व्यावहारिकभाषासु अपि परिहाससन्दर्भे पुरुषव्यत्ययः, वचनव्यत्ययश्च दृश्यते । तादृशः व्यवहारे संरूढः अर्थः एव सूत्रकारेण नियमरूपेण प्रदत्तः !

## ऋ) लोकव्यवहारप्रामाण्यम्

लोकव्यवहारम् एव उद्धृत्य विषयमण्डनकरणं पतञ्जलेः शैली । अल्पह्रस्वशब्दयोः विषये विमृशन् - 'यदल्पं ह्रस्वमपि तद्भवति, यच्च ह्रस्वम् अल्पमपि तद्भवति' इति उक्त्वा द्वौ अपि पर्यायवाचिनौ खलु इति प्रश्नस्य 'न' इति उत्तररूपेण 'अल्पं घृतम्, अल्पं तैलम् इत्युच्यते, न कश्चिदाह ह्रस्वं घृतं ह्रस्वं तैलमिति !' इति प्रतिपादयति । अत्र महर्षिः पतञ्जलिः 'न कश्चिद् आह' इति लोकव्यवहारमेव प्रमाणत्वेन स्वीकरोति । एतदेव स्पष्टयति यत् संस्कृतभाषा लोकभाषा आसीदिति ।

सर्वासु अपि भाषासु केचन विशिष्टाः शब्दसन्धानाः (Idioms-मुहाँवरे) भवन्ति । तत्रत्याः शब्दाः समाहृत्य अर्थविशेषं बोधयन्ति । शब्दानाम् एतद् विशिष्टं रूपं तत्तद्भाषाविशिष्टं सत् दीर्घेण गच्छता कालेन व्यवहारबलाद् उत्पद्यते । पण्डितैः सामान्यैः च सम्भूय विविधेषु दैनन्दिनिकेषु व्यवहारेषु या भाषा प्रयुज्यते तस्यामेव एतादृशं विशिष्टं रूपम् उत्पत्तुम् अर्हति, न अन्यथा । 'ऊर्यादिच्विडाचश्च' (१-४-६१) (एते क्रियायोगे गतिसंज्ञाः सुः) ऊरीकृत्य उररीकृत्य = अङ्गीकृत्य इत्यर्थः । मसमसाकरोति, मस्मसाकरोति = हिनस्ति इत्यर्थः । गुलगुधाकरोति = पीडयति इत्यर्थः ।

'कणेमनसी श्रद्धाप्रतीघाते' (१-४-६६) इति किञ्चित् सूत्रम् । कणेहत्य पिबति, मनोहत्य पिबति, अभिलाषनिवृत्तिपर्यन्तं यथेष्टं पिबति इति अर्थः । उरसिकृत्य, उरसिकृत्वा = अभ्युपगम्य; मनसिकृत्य, मनसिकृत्वा = निश्चित्य इति 'अनत्याधान उरसिमनसी' (१-४-७४) इति सूत्रेण साधितम् । मनसिकृत्य इत्येतद् आङ्ग्लभाषायां To make up one's mind इति शब्दस्वरूपम् अनुहरति । पाणौ करोति, हस्ते करोति = विवाहं करोति । 'नित्यं हस्ते पाणावुपयमने' (१-४-७६)

## ए) भाषिता वाक्

पतञ्जलेः विचारसरणिं परिशीलयामः । 'देवश्चेत् वृष्टः निष्पन्नाः शालयः' । वृष्टिः भविष्यति चेत् धान्यानि वर्धिष्यन्ते इत्यर्थके एतस्मिन् वाक्ये निष्पन्नाः इति भूतकालवाचकः शब्दप्रयोगः साधुः न, सम्पत्स्यन्ते इति भविष्यत्कालस्य प्रयोगः एव साधुः; अतः देवश्चेत् वृष्टः सम्पत्स्यन्ते शालयः इति वक्तव्यम् इत्यत्र भाष्यकारः वदति 'लोकः भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति, निष्पन्नाः शालयः इति वक्तव्यम्' इति । जनाः एतादृशे वाक्ये भविष्यत्कालप्रयोगं न सहन्ते, अतः 'निष्पन्नाः' इत्येव वक्तव्यमिति शास्ति ।

एतादृशरूपेण संस्कृतभाषा व्यवहारभाषा आसीत् इत्यत्र असंख्यानि उदाहरणानि सन्ति । एषा पुरा भाषिता आसीत् इति निश्चप्रचम् । अत एव 'भाषा' इति कथ्यते !

## ह्रासस्य कारणानि

तर्हि तादृशी सा भाषिता भाषा दैनन्दिनव्यवहारतः कथम् अदृश्यतां गता ? कारणानि बहूनि स्युः ऐतिहासिकानि, सामाजिकानि, व्यक्तिगतानि च इति । ऐतिहासिकानि यथा - प्रादेशिकभाषाणां विकासः, नूतनमतप्रवर्तकैः संस्कृतेतरभाषाणाम् आश्रयणम्, राजाश्रयस्य अभावः, वैदेशिकानाम् आक्रमणम्, भारतीय विश्वविद्यालयानां, गुरुकुलानां, ग्रन्थालयानां च नाशनम्, सहस्रवर्षाणां परकीयशासनकाले विदेशिभाषाणां राजभाषात्वम्, विदुषाम् आश्रयस्थानभूतानां मठमन्दिराणां नाशनम् इत्यादीनि । सामाजिकानि यथा- स्त्रीणां संस्कृतशिक्षणस्य न्यूनता, सामाजिककुरीतीनां वर्धनम्, वर्णव्यवस्थायाः जातिव्यवस्थारूपेण परिवर्तनम्, उच्चनीच-स्पृश्यास्पृश्यादिभेदभावनिर्माणम्, सांस्कृतिकम् आक्रमणम्, रूढिवादः इत्यादीनि । व्यक्तिगतकारणेषु परिवर्तितकालानुगुणं वा परिवर्तमानकालानुगुणं भाषायाः संरक्षणाय संवर्धनाय च अपेक्षितानां योग्यानाम् उपक्रमाणाम् अस्वीकारः, रोगनिदानस्य अनवगमनम् इत्यादीनि ।

## विपरीतपरिणामः

संस्कृतस्य ह्रासे अन्यदपि कारणद्वयं किञ्चिद् महत्त्वम् आवहति । बाह्यपरिस्थितितः प्रभाविताः सन्तः संस्कृतज्ञाः क्रमशः संस्कृतभाषया व्यवहारं परित्यज्य प्रादेशिकभाषया वाग्व्यवहारम् आरब्धवन्तः । तस्मात् गच्छता कालेन संस्कृतमातृभाषिपरम्परा छिन्ना जाता । यावत् भाषा व्यवहारे भवति तावत् भाषा सरला तिष्ठति । प्रतिदिनव्यवहारतः च्युतायां सत्यां ग्रन्थरचनायां, शास्त्रचर्चासु च केवलं प्रयोगात् विद्वद्भिः प्रौढसंस्कृतस्यैव प्रयोगः क्रियते स्म । किञ्च अन्योपि विषयः अस्माभिः अवगन्तव्यः यत् यदा कदापि कस्यचिद् ह्रासः क्षयः वा भवति, तदा तस्य रक्षणस्य प्रयत्नः अपि अधिकः भवति इति । ह्रासस्य अनुपातानुगुणं रूढिवादः वर्धते । यथा यथा संस्कृतस्य ह्रासः वर्धमानः अभवत् तथा तथा शुद्धतारक्षणवादः भाषाप्रौढिमतासम्पादनयत्नः च प्रवर्धमानः एव

| | ग्रहणकौशले | अभिव्यक्तिकौशले |
|---|---|---|
| ध्वनिः | श्रवणम् | भाषणम् |
| | भाषा | |
| लिपिः | पठनम् | लेखनम् |

आसीत् । तेन लाभः हानिः चेति उभयमपि जातम् । लाभो नाम संस्कृतस्य संस्कृतत्वं सुष्ठु रक्षितम् । हानिः इत्युक्ते दोषभयेन, दुरवगम्यताकारणतः च जनाः संस्कृततः दूरं गतवन्तः । दोषभयेन जनाः संस्कृतव्यवहारं न कुर्वन्ति स्म, प्रौढसंस्कृतकारणतः जनानां रुचिः न अवर्धत नष्टप्राया ।

## कुठारप्रहारः

परन्तु संस्कृतस्योपरि सर्वापेक्षया बलवत्तरः आघातः ब्रिटिश्-शासनकाले अभवत् । ब्रिटिशाः चिन्तितवन्तः यत् भारते दीर्घकालं शासनं करणीयं चेत् अत्रत्यजनानां स्वाभिमानः, श्रद्धा च नाशनीया, अत्रत्याः तेषां प्रेरणास्रोततः अर्थात् संस्कृतितः परम्परातः च छेत्तव्याः इति । किञ्च देशमानसम् आङ्ग्लनिष्ठं करणीयम् इति । एतेन उद्देशद्वयेन एव मेकालेद्वारा आङ्ग्लशिक्षणम् आरब्धम् ।

प्राज्ञाः वदन्ति यत् कस्यचित् राष्ट्रस्य नाशः करणीयः चेत् तस्य राष्ट्रस्य संस्कृतिः नाशनीया, संस्कृतिः नाशनीया चेत् सांस्कृतिकभाषा नाशनीया इति । भारतस्य सांस्कृतिकभाषां संस्कृतभाषां नाशयितुम् आङ्ग्लेयैः कार्यत्रयं कृतम् । प्रथमं कार्यं तावत् सर्वासां संस्कृतपाठशालानां पिधानं कृत्वा आङ्ग्लविद्यालयानाम् आरम्भः, द्वितीयं तु संस्कृतभाषा मृतभाषा इति प्रचारः, तृतीयं तावत् संस्कृतस्य शिक्षणविधिपरिवर्तनम् ।

मृतभाषा इति शताधिकवर्षाणि यावत् प्रचारस्य प्रभावः एतावान् जातः यद् अद्यापि अस्मदीयाः एव जनाः तस्यैव पुनः पुनः उल्लेखं कुर्वन्ति । 'संस्कृतं मृतं न' इति रक्षणात्मकं वादं कुर्वन्तः स्मः । संस्कृतभाषा मृतभाषा न इति पुनः पुनः नेतिवादं कृत्वा वयमेव तां समस्यां जीवन्तीं रक्षामः । वस्तुतः अस्माभिः सः वादः परित्यक्तव्यः, येन कालक्रमशः जनानां स्मृतिपटलतः एव सः विषयः अपगतः भवेत् । कदाचित् 'मृतभाषा' इति आक्षेपः अस्ति इति वक्तव्यं चेदपि 'निर्जीवभाषा' इति पदान्तरस्य प्रयोगः कर्तव्यः । यथा हिटलरस्य प्रचारप्रमुखस्य गोबेल् इत्यस्य सिद्धान्तः रणनीति च आसीत् यत् 'एकम् असत्यं शतवारं वदति चेत् जनानां मनसि

तदेव सत्यमिति चित्रितं भवति' इति, तथा तादृशनीतिं मनसि निधाय एव निर्जीवभाषा इति प्रचारस्य कुयोजना आङ्ग्लेयैः कृता ।

## संस्कृतशिक्षणे विदेशीयविधिः

पूर्वं तावद् भारते संस्कृतमाध्यमेन संस्कृतस्य पाठनं भवति स्म । प्रथमं भाषापरिचयं कोशपरिचयं च कारयित्वा पश्चात् व्याकरणं शिक्षयन्ति स्म । परन्तु आङ्ग्लेयाः तदानीन्तनसमये युरोपमध्ये आङ्ग्लभाषाशिक्षणे यः २००० वर्षपुरातनः व्याकरण-अनुवाद-विधिः उपयुज्यमानः आसीत् तं विधिं भारते संस्कृतशिक्षणे आनीतवन्तः । परिणामतः च्छात्राणां संस्कृतवाङ्मयस्य अवगमनसामर्थ्यम्, इतरभाषाभिः अनुवादसामर्थ्यं च अभवत्, परन्तु संस्कृतभाषायाः प्रयोगसामर्थ्यं नाभवत् । संस्कृतभाषया व्यवहारपरम्परा पूर्णतया नष्टा ।

## भाषाशब्दः अन्वर्थकः भवेत्

भाषा इति शब्दः 'भाष्' धातुतः भवति । धातोः अर्थः एव 'व्यक्तायां वाचि' इति । प्रकटरूपेण उच्चध्वनिना वा कथनम् इत्यर्थः । भाष्यते अनया इति भाषा । भाषाविज्ञानमतानुसारं विचाराणाम् आदानप्रदानस्य माध्यमं भाषा । सा च भाषा संवादशीला । अतः भाषणेन विना संस्कृतस्य भाषात्वमेव कथं सिद्ध्यति ?

## भाषा-अधिगमन-प्रक्रिया

अस्माकं मातृभाषायाः अभ्यासः कथं भवति ? जन्मतः शिशुः मातृभाषाशब्दान् शृणोति । पुनः पुनः श्रवणेन सः ध्वनिः शिशोः मनसि मुद्रितः भवति । पुनः तेन ध्वनिना सह तद्ध्वनिसम्बद्धचित्रं मुद्रितं भवति । शिशुः श्रुतस्य दृष्टस्य च सम्बन्धं कल्पयति । तेन शब्दार्थः शिशुना गृह्यते । तदनन्तरं सः ध्वनेः अनुकरणस्य आरम्भं करोति, अर्थात् भाषितुम् आरभते । तत्पश्चात् ध्वनेः लिपेः च सम्बन्धं ज्ञात्वा लिपिं जानाति, लिपिमाध्यमेन शब्दं ज्ञात्वा शब्दम् उच्चारयति, अर्थात् पठति । तत्पश्चात्

मुखेन वदन् लेखनाभ्यासं करोति । एषा सहजा मातृभाषाऽभ्यासपद्धतिः । षष्ठपृष्ठस्य चित्रस्य अनुसारं भाषाम् अधिगन्तुं श्रवणं भाषणं पठनं लेखनं चेति एकैकं सोपानम् आरुह्य गन्तव्यं भवति। वर्तमानसमये संस्कृतशिक्षणस्य आरम्भः लेखनतः भवति, किञ्च पठने एव परिसमाप्तः भवति । भाषणस्य श्रवणस्य च स्थानमेव नास्ति । मातृभाषाभ्यासः सोपानक्रमेण अर्थात् आरोहणक्रमेण भवति । प्रकृतं तु संस्कृताभ्यासः विपरीतक्रमेण भवति । प्रथमस्य ऊर्ध्वगतिः, द्वितीयस्य अधोगतिः । संस्कृतस्य वर्तमानायाः अधोगतेः कारणम् एतदेव !

## सर्वमूलं भाषणम्

द्वादशे पृष्ठे दत्तस्य चित्रस्य अनुसारं चतुर्षु कौशलेषु श्रवणभाषणयोः ध्वनिमाध्यमम् । पठनलेखनयोः लिपिमाध्यमम् । लिपिरपि उच्चार्यमाणवर्णानां संज्ञारूपेण अस्ति । अतः लिपिरपि ध्वनेः अभिव्यञ्जकरूपमेव । अतः ध्वनेः एव सर्वप्राथम्यम् । श्रवण-पठन-काले ज्ञानस्य ग्रहणं भवति । भाषण-लेखन-काले ज्ञानस्य अभिव्यक्तिः भवति । अतः पूर्वतने द्वे ग्रहणकौशले, अनन्तरीये द्वे अभिव्यक्तिकौशले । भाषाशिक्षणं नाम चतुर्णामपि कौशलानां पाठनम् । अद्य लोके वयम् एतद् पश्यामः यद् संस्कृतेन उक्तम् अवगन्तुं केषाञ्चिद् जनानां क्षमता भवति । परन्तु तदेव संस्कृतेन भाषताम् इत्युक्ते ते भाषितुं न शक्नुवन्ति । अर्थात् तेषां श्रवणकौशलं भवति, भाषणकौशलं न । केषाञ्चित् संस्कृतेन पठितस्य अवगमनं भवति, तेषां पठनकौशलं भवति । तथाऽपि संस्कृतेन भाषणकौशलं न भवति । केचन संस्कृतेन लेखितुं प्रभवन्ति, परन्तु भाषणं कर्तुं न शक्नुवन्ति । परन्तु यः तावद् संस्कृतेन भाषणं कर्तुं शक्नोति सः श्रुत्वा अवगन्तुं शक्नोति, पठनं लेखनं च कर्तुं शक्नोति । एतेन ज्ञायते यत् कस्यचित् श्रवणं, पठनं, लेखनं च इति त्रिषु कौशलेषु सत्सु अपि भाषणकौशलं भवेदेव इति वक्तुं न शक्यते, परन्तु यस्मिन् भाषणकौशलं भवति तस्य श्रवण-पठन-लेखन-कौशलानि भवन्ति एव । अतः भाषणकौशलमेव सर्वकौशलानां मूलम् । तस्माद् शिक्षणे भाषणस्यैव

सर्वाधिकप्राधान्यं भवेत् ।

व्याकरणमहाभाष्ये पस्पशाह्निके शब्दज्ञानस्य धर्मजनकताधिकरणे जिज्ञासा अस्ति 'शब्दस्य ज्ञाने धर्मः, आहोस्वित् प्रयोगे ?' इति । समाधानं वदति – नापि ज्ञाने एव धर्मः, नापि प्रयोगे एव । किं तर्हि ? ''शास्त्रपूर्वके प्रयोगे अभ्युदयः'' अर्थात् ज्ञानपूर्वके प्रयोगे एव धर्मोत्पत्तिः इति । अतः प्रयोगाभावे केवलं शब्दज्ञानमात्रेण प्रयोजनं नास्ति । ज्ञानपूर्वकः प्रयोगः कर्तव्यः । अद्य संस्कृतशिक्षणे 'प्रयोगः' पुनः प्रयोगपथे आनेतव्यः !

## श्रवणसंस्कारः

'संस्कृताभ्यासः मातृभाषायाः अभ्यासः इव न । न गृहे तादृशं वातावरणं, न विद्यालये, न वा समाजे, अतः मातृभाषायाः इव संस्कृतभाषायाः अभ्यासः न शक्यः' इति केचन वदेयुः । रेलस्थानके 'कूलि' इति कथ्यमानः सामान्यम् इङ्ग्लिष्व्यवहारं करोति । केन प्रकारेण सः इङ्ग्लिष् अभ्यस्तवान् ? हिन्दीभाषिक्षेत्रतः ये M.B.B.S, B.E. इत्यादीनां पठनाय कर्णाटकं गच्छन्ति तेषु बहवः तत्र गमनानन्तरं २-३ मासेषु एव कन्नडभाषया वक्तुं समर्थाः भवन्ति । कथं ते शक्नुवन्ति ? श्रुत्वा श्रुत्वा, उक्त्वा उक्त्वा च, न तु व्यवस्थितेन अध्ययनेन । अतः कस्याश्चिदपि भाषायाः सामान्यव्यवहारज्ञानं सम्पादयितुं सम्भाषणमेव शरणम् । सम्भाषणमेव सरलतमः उपायः । भाषाश्रवणेन, किञ्च तच्छ्रवणसमये अस्माकं बुद्धेः उपयोगेन च शब्दार्थानां, भाषानियमानां वा बोधः अस्माकं भवत्येव । तथा शृण्वता, भाषमाणेन च तेन क्रमशः स्वस्य भाषा परिष्क्रियते । एवं श्रवणेन यद् ज्ञानं भवति, प्रयोगेण तद् दृढं भवति । प्रयोगेण परिष्कारः अपि भवति ।

## विनाऽयासेन संस्कृतम्

पञ्चदशवर्षेभ्यः प्राक् बेङ्गलूरनगरे संस्कृतभारत्याः कार्यालयं प्रतिदिनं यः पत्रवितारकः पत्रवितरणं कुर्वन् आगच्छति स्म, यः दुग्धवितारकः आगच्छति स्म, अथवा संस्कृतकार्यकर्तारः पाकसम्बन्धिवस्तूनाम् आनयनाय


एतस्य कारयानस्य भागा: के, ते भागा:
कथं कार्यं कुर्वन्ति इति जानामि, परन्तु
कारयानं चालयितुं न शक्नोमि।
भाषा

यम् आपणं गच्छन्ति स्म तस्य आपणस्य स्वामी इत्यादयः ते सर्वे प्रतिदिनं द्वित्राणि संस्कृतवाक्यानि श्रुत्वा उक्त्वा वा द्वित्रेषु मासेषु संस्कृतेन सम्भाषणम् आरब्धवन्तः । एतादृशरीत्या सामान्यसंस्कृतव्यवहारद्वारा भाषाभ्यासं कृतवतां संख्या महती अस्ति । एवंप्रकारेण सम्भाषणद्वारा भाषाभ्यासः बहु शीघ्रं भवति, सुखेन च भवति । वस्तुतः कस्याश्चिद् अपि भाषायाः अभ्यासाय राजमार्गः, सरलः मार्गः वा समीपमार्गो नाम तया भाषया सम्भाषणम् ।

## सरल-सम्भाषण-विधिः

विश्वे यत्र कुत्रापि गत्वा पश्यामः चेत् ज्ञायते यत् सर्वस्याः अपि भाषायाः पाठनावसरे तया भाषया सम्भाषणं कथमित्यपि पाठयन्ति । कश्चन पृच्छेत् 'ताभिः भाषाभिः तावत् व्यवहारस्य आवश्यकता भवति, तत्र भाषाभ्यासस्य लक्ष्येषु सम्भाषणमपि मुख्यं लक्ष्यम्, अतः तत्र सम्भाषणं पाठयन्ति । संस्कृतविषये तु संस्कृतेन व्यवहारस्य आवश्यकता न भवति, वाङ्मयावगमनं केवलं लक्ष्यम्, अतः सम्भाषणपाठनस्य का आवश्यकता' इति । 'भाषां न केवलम् अवगन्तुं पाठयतु, अपि तु तस्याः प्रयोगकरणमपि शिक्षयतु' इति यद्यपि भाषाशिक्षणविदः वदन्ति तथापि सम्भाषणोद्देशेन केवलं सम्भाषणपाठनं न; भाषाशिक्षणस्य सरलविधिरूपेण सम्भाषण-माध्यमेन पाठनं करणीयं भवति । सम्भाषणद्वारा भाषाभ्यासेन विना भाषा स्वाधीना न भवति, करगता न भवति, सहजता न आयाति च ।

## भाषां पाठयतु, न तु भाषाविषये

भाषायाः नियमज्ञानं प्रयोगकौशलम् इत्येतयोः मध्ये भेदः अस्ति । कस्यचित् जनस्य संस्कृतभाषायाः नियमज्ञानमस्तीति कारणतः तस्य संस्कृतभाषायाः प्रयोगकौशलं भवत्येव इति वक्तुं न शक्यते । परन्तु यस्य प्रयोगसामर्थ्यं भवति तस्य नियमज्ञानं परोक्षतया भवत्येव । अतः भाषाभ्यासस्य केन्द्रबिन्दुः प्रयोगः भवेत् । यथा किञ्चित् सर्वसामान्यम् उदाहरणम् - 'परिषद्' शब्दस्य षष्ठी-एकवचनरूपं 'परिषदः' इति सर्वे

जानन्ति । परन्तु तादृशेषु ज्ञानिषु अपि बहवः भाषणसमये 'परिषदस्य' इति प्रयोगं कुर्वन्ति । किमर्थम् ? सम्भाषणस्य अभ्यासाभावः । परिषदः इति शुद्धशब्दरूपस्य प्रयोगकरणस्य पुनःपुनः वाक्ये सन्दर्भे च अभ्यासाभावः ।

## भाषया विविधकार्यसम्पादनम्

भाषायाः प्राथमिकं प्रयोजनमेव निवेदनं, प्रश्नकरणम्, विचारणम्, कथनं, वर्णनम्, आह्वानम्, स्वागतीकरणम्, आप्रच्छनम्, इत्यादिकार्यसम्पादनम् । अतः भाषायाः शिक्षणं नाम तया भाषया तत्तत्कार्यकरणस्य शिक्षणम् । अर्थात् विविधप्रसङ्गेषु भाषाव्यवहारः कथं कर्तव्यः इति पाठनम् ।

## किं पुस्तकपाठनमेव संस्कृतपाठनम् ?

कश्चन मधुसूदनभट्टः इति संस्कृतशिक्षकः । सः अस्माभिः प्रार्थितः 'कृपया भवान् स्वपत्नीपुत्रान् संस्कृतं पाठयतु' इति । तदा तेन उक्तं यत् समयाभावात् न शक्यम् इति । इत्युक्ते कः अर्थः इति अस्माभिः पुनः पृष्टम् । तदा सः उक्तवान् -'बालानां, पत्न्याः, मम च सर्वेषाम् अपि समानः अनुकूलः समयः नास्ति, अतः पाठनं न शक्यम् इति । तस्य आशयः आसीत् गृहे पत्नीपुत्राः निश्चिते समये उपवेश्य सपुस्तकं पाठनीयाः इति । पुस्तकेन विना एव गृहे परस्परं यत् सम्भाषणं क्रियते तदेव संस्कृतेन कुर्वता सम्भाषणमाध्यमेन एव प्रतिदिनं स्वल्पं पाठयता गृहजनान् संस्कृतं पाठयितुं शक्यते इति सः न अवगतवान् आसीत् । अद्य पाठनं नाम पुस्तकद्वारा इति चिन्तनम् अस्ति । वस्तुतः सम्भाषणद्वारा भाषापाठनं बहु प्रभावि भवति, आकर्षकं च भवति । यतः तत्र कुतूहलं भवति, रुचिः भवति, तत्क्षणप्रयोजनमस्ति, सर्जनशीलप्रतिभायाः प्रयोगः कर्तुं शक्यते च । आनन्दः भवति च । अतः सम्भाषणद्वारा भाषायाः पाठनस्य अपेक्षया प्रभावितरः विधिः जगति अन्यः नास्ति ।

भाषायाः नियमानाम् अवगमनाय भाषाप्रयोगस्य पूर्वानुभवः

आवश्यकः । नो चेत् छात्रः उदाहरणानि सम्यगवगन्तुं न शक्नोति, सिद्धान्तस्य उदाहरणे अन्वयं कर्तुं न शक्नोति । अतः एव प्रथमं सम्भाषणद्वारा भाषापरिचयं कारयित्वा अनन्तरं नियमाः शिक्षणीयाः । तदा नियमावगमनं स्पष्टं शीघ्रं च भवति ।

## आक्षेपत्रय-निवारणम्

संस्कृतं कठिनं, निर्जीवम्, जातिविशेषस्य भाषा च इति यद् आक्षेपत्रयम् अस्ति तस्य निवारणे संस्कृतसम्भाषणं बहु उपकारकं भवति । संस्कृतं कठिनम् इति भावनिर्माणे पाठनविधिः पाठ्यपुस्तकानि च यावन्मात्रेण कारणीभूतानि सन्ति तावता एव प्रमाणेन संस्कृतभाषया अव्यवहारः, व्यवहारे प्रौढभाषया पाण्डित्यपूर्णभाषया च व्यवहारः अपि कारणम् अस्ति । संस्कृतेन उक्तं श्रुत्वा यदा जनाः नावगच्छन्ति, पठित्वा वा नावगच्छन्ति अथवा भाषायाः अध्ययने अभ्यासे वा क्लेशम् अनुभवन्ति तदा संस्कृतं कठिनम् इति चिन्तयन्ति । यदि सरलसंस्कृतेन सम्भाषणं कुर्मः तर्हि कठिनमिति भावस्य परिवर्तने साहाय्यं भवति । यतः सामान्यतः लोके कयापि भाषया व्यवहारसमये लघुवाक्यस्य प्रयोगः भवति, अन्वयक्रमेण वाक्यरचना भवति, शब्दाडम्बरः न भवति, किञ्च कथने अर्थानुगुणं ध्वनेः आरोहणावरोहणादिकं भवति, हस्तादीनां चालनं भवति, अभिनयः भवति, मुखे भावप्रकाशनं भवति तथा च सम्भाषणस्य प्रसङ्गः कश्चन भवति इति एतैः कारणैः भाष्यमाणवाक्यानाम् अर्थबोधः सरलतया भवति । तथा सहजवेगेन कथ्यमानं संस्कृतं श्रुत्वा श्रोता अवगच्छति तथा च संस्कृतं सरलमिति भावयति ।

## भाषणेन न, सम्भाषणेन

संस्कृतं निर्जीवम् इति यः आक्षेपः अस्ति सः यद्यपि आङ्ग्लेयानां सृष्टिः तथाऽपि अद्य अस्माभिः तद्विषये गम्भीरतया चिन्तनीयम् । वयं संस्कृतं जीवति इति संस्कृताभिमानेन प्रतिपादयितुं बहूनि निदर्शनानि दद्मः यथा पाठशालासु, शास्त्रचर्चासु, सभासम्मेलनेषु संस्कृ व्यवहारः




पूजा न, प्रयोगः आवश्यकः

भवति, संस्कृतेन आकाशवाणी-दूरदर्शनवार्ताः सन्ति, सर्वभारतीयभाषासु अधिकाः शब्दाः संस्कृतशब्दाः इत्यादिरूपेण । भाषाविज्ञानस्य मतानुसारं तु यया भाषया क्रीडितुं शिशवः न सन्ति सा भाषा निर्जीवा इति । तल्लक्षणानुसारं अद्य देशे कति संस्कृतभाषिणः शिशवः सन्ति ? अङ्गुलिगणनीयाः एव, अर्थात् नगण्याः इव । परेषां सम्मुखे, संस्कृतविरोधिनां सम्मुखे वा संस्कृतं जीवति इति वयमपि प्रमाणयामः । परन्तु वयमेव केवलं यदा स्मः तदा किञ्चित् वास्तविकं चिन्तनं कुर्याम । जनाः कदा वा संस्कृतं जीवति इति चिन्तयेयुः ? यदा ते गृहेषु, मार्गेषु, आपणेषु कार्यालयेषु उद्यानेषु क्रीडाङ्गणेषु तत्र तत्र सहजतया जनैः परस्परं व्यवह्रियमाणं संस्कृतं शृण्वन्ति तदा । तावत्पर्यन्तं तेषां संस्कृतविषये मनसः परिवर्तनं न भवति । वयं कार्यक्रमेषु मञ्चेषु स्थित्वा संस्कृतं जीवति इति यावदपि उत्कृष्टं भाषणं कुर्याम, विद्वत्पूर्णं लेखं वा लिखेम, तथाऽपि परिस्थितेः परिवर्तनं न भविष्यति । यावत्पर्यन्तं सहजतया व्यवह्रियमाणां भाषां न शृण्वन्ति तावत्पर्यन्तं जनाः संस्कृतं जीवति इति न अङ्गीकुर्वन्ति । सम्भाषणेन केवलं जनमानसपरिवर्तनं कर्तुं शक्यते । अतः मञ्चेषु भाषणेन न, अपि तु दैनन्दिनजीवने सम्भाषणेन संस्कृतं जीवति । अतः अस्माभिः संस्कृतं जीवति इति प्रतिपादनाय तर्कैः यः श्रमः क्रियते तस्य श्रमस्य शते एकं भागं यदि वयं सम्भाषणे व्ययीकुर्मः तर्हि संस्कृतस्य महान् उपकारः भविष्यति । सम्भाषणेन विना भाषणमात्रं करोति चेत् हानिः एव ।

## उत्तमः प्रचारोपायः

संस्कृतसम्भाषणान्दोलनस्य कार्यकर्तारः देशे तत्र तत्र कश्चित् कार्यक्रमं कुर्वन्ति । तद्यथा - महानगरेषु नगरयानानि भवन्ति । द्वौ कार्यकर्तारौ कस्यचित् लोकयानस्य आरोहणं कुरुतः । द्वावपि लोकयानस्य अन्तः अग्रे पृष्ठतः च स्थित्वा परस्परम् उच्चैः वार्तालापं कुरुतः । तदा याने विद्यमानाः सर्वे जनाः तौ एव पश्यन्ति, परस्परं वदन्ति । तौ संस्कृतेन वदतः इति अथवा कश्चन पृच्छति च यद् किं भवान् संस्कृतेन वदति ?

इति । तथा पृष्टे सति तम् उद्दिश्य किञ्चित्कालं संस्कृतेन एव विवरणं करोति । पश्चात् द्वौ अपि तस्मात् यानाद् अवतीर्य अन्यद् यानम् आरुह्य तत्राऽपि एवमेव सम्भाषणं कुरुतः । पुनः अन्यद् यानम् । एवं दिनार्धे २५ अधिकयानेषु सम्भाषणं श्रावयन्ति । तेन सहस्राधिकजनाः संस्कृतसम्भाषणं श्रुत्वा प्रभाविताः भवन्ति । कार्यक्रमार्थमेव द्वाभ्यां बहुभिः वा लोकयानस्थानकं, रेलस्थानकं, तीर्थघट्टं, मेलां वा गत्वा सम्भाषणप्रचारः कर्तुं शक्यते चेत् समीचीनम् । तदर्थमेव गन्तुं न शक्यते चेत् चिन्ता न करणीया । वयम् एकैकोऽपि यत्र गच्छामः तत्र, येन मिलामः तेन सह (भवतु नाम सः संस्कृतज्ञः असंस्कृतज्ञः वा) संस्कृतेन सम्भाषणं कुर्मः, पूर्णरूपेण संस्कृतेन न चेत् द्वित्राणि वाक्यानि वा संस्कृतेन वदामः चेत् संस्कृतस्य महती सेवा भविष्यति । (एतदर्थं सर्वकारस्य साहाय्यम् अनुदानं वा नावश्यकम् !) एवं वयं सर्वे संस्कृतज्ञाः संस्कृतच्छात्राः च सर्वत्र संस्कृतसम्भाषणं कुर्वन्तः जनान् सरल-संस्कृतसम्भाषणं श्रावयेम तदा समाजस्य विचारपरिवर्तनं भविष्यति ।

सम्भाषणसमये वयं जातिमतादिकं न पश्यामः । सर्वैः सह सम्भाषणं कुर्मः । सम्भाषणद्वारा संस्कृतं सर्वेषां मध्ये प्रसृतं भविष्यति । तेन च क्रमशः तृतीयः आक्षेपः अपि परिमार्जितः भविष्यति ।

## भाषणे चैतन्यम्

भाषणे काचित् शक्तिः भवति या च लिखितरूपे न भवति । सम्भाषणश्रवणेन सम्भाषणेन वा जनेषु उत्साहनिर्माणं भवति, चैतन्यनिर्माणं भवतीति अस्माकम् अनुभवः । किञ्च संस्कृतसम्भाषणेन जनेषु संस्कृतविषयकम् आभिमुख्यं निर्मितं भवति, श्रवणसंस्कारेण आत्मीयता निर्मिता भवति । रुचिः जागर्ति, सरलतायाः अनुभवेन अहमपि पठितुं शक्नुयाम् इति विश्वासभावः उत्पद्यते, संस्कृतविषयकाः मानसिकाः अवरोधाः नष्टाः भवन्ति च ।

## स्वाभिमानस्य जागरणम्

संस्कृतभाषा भारतस्य सांस्कृतिकभाषा इति, संस्कृतभाषायाः द्वारा

भारतं जगद्गुरुः आसीदिति, संस्कृतवाङ्मये एव भारतीयज्ञानभण्डारम्, भारतीयगरिमा च अस्ति इत्यादिभिः कारणैः संस्कृतभाषया सह राष्ट्रियस्वाभिमानस्य सम्बन्धः अस्ति । अत एव 'सत्यमेव जयते', 'योगक्षेमं वहाम्यहम्' इत्यादिरूपेण सर्वासां राष्ट्रियसंस्थानां बोधवाक्यानि संस्कृतेन एव भवन्ति । राष्ट्रमानसे संस्कृतस्य किञ्चित् विशिष्टं गौरवोपेतं स्थानम् अस्ति । अतः सहजतया यथा यथा संस्कृतसम्भाषणम् अधिकं भविष्यति तथा तथा व्यक्तौ जनमानसे च देशाभिमानः, राष्ट्राभिमानः च वर्धिष्यते । स्वाभिमानस्य जागरणं भविष्यति ।

## पुनरुज्जीवनम्

दैनन्दिनजीवनस्य सर्वेषु क्षेत्रेषु यदा संस्कृतेन व्यवहारः क्रियते तदा बहूनां भावानां प्रकाशनाय बहुविधानां शब्दानाम् आवश्यकता भवति, अद्यतनानां वस्तूनां संस्कृतनामानि आवश्यकानि भवन्ति । एतादृशसन्दर्भे एव प्राचीनशब्दानां पुनः प्रकाशनं भवति, अपि च नूतनशब्दानां निर्माणं भवति । न केवलं शब्दस्तरे, अपि तु वाक्यस्तरे अपि चिन्तनं भवति । एतेन भाषाविकासः भवति । वर्तमानविचाराः, आधुनिकविषयाः संस्कृते अपि प्रकटिताः भवन्ति । समकालिकसाहित्यं निर्मितं भवति तेन च संस्कृतभाषायाः समकालिकत्वं सम्पद्यते । एवं संस्कृतसम्भाषणेन संस्कृतभाषायाः संस्कृतवाङ्मयस्य च विकासः भविष्यति ।

## संस्कृतेः-पुनरुत्थानम्

भाषा संस्कृतिः च इति द्वयोः महान् सम्बन्धः । द्वयमपि परस्परं पूरकं, द्वयमपि अविभाज्यं च । सर्वदा मिलित्वा भवतः । यत्र या भाषा गच्छति तत्र तद्भाषागतसंस्कृतिः अपि गच्छति । एतस्य सत्यस्य प्रत्यक्षनिदर्शनं भारते आङ्ग्लभाषा आङ्ग्लसंस्कृतिः च । आङ्ग्लभाषा आगता, तया सह आङ्ग्लसंस्कृतिः अपि आगता । यदा पुनः संस्कृतभाषा दैनन्दिनव्यवहारे प्रयुक्ता भवति तदा सा संस्कृतसंस्कृतिः पुनरपि दैनन्दिन-जीवने प्रतिष्ठापिता भविष्यति । अतः संस्कृतेन सम्भाषणं नाम


किं भवन्तः द्विवचनं त्यक्तवन्तः?
वयं द्विवचनं न त्यक्तवन्तः, द्वितीयस्तरे पाठयामः ख। परन्तु भवन्तः वचनत्रयमपि त्यक्तवन्तः खलु!

भारतीयसंस्कृत्याः व्यवहारे आनयनम् ।

## सामाजिक-समरसता

अद्य भारते याः भेदभावनाः सन्ति - जातिभेदभावना, मतभेदभावना, उच्चनीचभेदभावना, स्पृश्यास्पृश्यभेदभावना, प्रान्तभेदभावना, भाषाभेदभावना, उत्तर-दक्षिणभेदभावना इति सर्वविधभेदभावनानां निवारणं कृत्वा राष्ट्रियभावैक्य- निर्माणे सामाजिक-समरसता-सम्पादने संस्कृतसम्भाषणं किञ्चित् प्रबलं साधनम् अस्ति ।

## संस्कृतज्ञ इति अभिज्ञानम्

१९८४ तमे वर्षे बेङ्गलूरनगरे किञ्चित् संस्कृतसम्भाषणशिबिरं प्रचलति स्म । कश्चन संस्कृतप्रवक्ता तत् शिबिरं द्रष्टुं प्रतिदिनम् आगच्छति स्म । प्रेक्षकोऽपि सः शिबिरान्ते इतरच्छात्रैः सह स्वीयम् अनुभवम् उक्तवान् - 'शिबिरारम्भानन्तरं षष्ठे दिने अहं गृहं गत्वा जीवने प्रथमवारं पत्न्या सह संस्कृतेन भाषितुम् आरब्धवान् । तदा पत्नी मामुद्दिश्य साश्चर्यम् उक्तवती यत् आवयोः विवाहस्य विंशतेः वर्षाणाम् अनन्तरम् अहम् अद्य ज्ञातवती - भवान् संस्कृतज्ञः इति । एतया घटनया वयं किम् अवगच्छामः ? संस्कृतेन सम्भाषणेन वयं संस्कृतज्ञाः इति अभिज्ञानं भवति । अतः सर्वः अपि संस्कृतज्ञः स्वीयसंस्कृतसम्भाषणद्वारा समाजे संस्कृतज्ञः इति अभिज्ञातः भवेत् । संस्कृतसम्भाषणद्वारा एव सः परिचितः स्यात् । संस्कृतसम्भाषणम् अस्माकं लक्षणं भवेत् ।

## संघटनाय साधनम्

देशे विकीर्णानां पञ्चलक्षाधिकानां संस्कृतज्ञानां संघटनाय कः उपायः ? संस्कृतसम्भाषणमेव । यतः परस्परं संस्कृतेन व्यवह्रियते चेदेव अस्मासु विशिष्टं बान्धव्यं निर्मितं भवति, संस्कृतपरिवारकल्पना दृढीभवति, आत्मीयतानिर्माणं भवति, परस्परं भावबन्धनं भवति ।

## संस्कृतं संस्कृतमाध्यमेन

अनुवादविधिना संस्कृतस्य पाठनेन संस्कृतज्ञानं सुष्ठु न भवति,




एतस्य यानस्य कदापि दुर्घटना न अभवत् यतः तद् यानं कदापि मार्गे न गतवत्!

संस्कृतं संस्कृतमाध्यमेन एव पाठनीयं, परीक्षासु उत्तरपत्रिकाः अपि संस्कृतेन एव लेखनीयाः इति अद्यत्वे सर्वे शिक्षणविदः वदन्ति । परन्तु संस्कृतशिक्षाक्षेत्रे तादृशं महत्त्वभूतं परिवर्तनं कथम् आनेतव्यम् ? कुतः आरम्भः कर्तव्यः ? आचार्येभ्यः उत च्छात्रेभ्यः इति महान् प्रश्नः अस्ति। यदि एकवारं सर्वैः संस्कृतशिक्षकैः च्छात्रैः च संस्कृतसम्भाषणस्य आरम्भः क्रियते तर्हि प्राथमिके माध्यमिके स्नातके स्नातकोत्तरे च सर्वेषु स्तरेषु युगपद् संस्कृतमाध्यमस्य आरम्भः कर्तुं शक्यते । संस्कृतेन सम्भाषणाय महत् किमपि शास्त्रज्ञानम् आवश्यकं नास्ति । परिमिताः एव शब्दाः, क्रियापदानि, वाक्यरचनाः च पर्याप्ताः भवन्ति । तावद् ज्ञानं तु सर्वेषामपि भवति । इदानीं तु अभ्यासमात्रम् अपेक्षितम् । तदर्थं सम्भाषणस्य आरम्भमात्रं करणीयम् । पश्चात् 'शकटं' स्वयमेव अग्रे गमिष्यति । एवं संस्कृतसम्भाषणं संस्कृतशिक्षाक्षेत्रे महत् परिवर्तनम् आनेतुं शक्नोति, सर्वत्र उत्साहनिर्माणं कर्तुं शक्नोति च ।

## शास्त्रज्ञानाय सम्भाषणम्

केचन वदन्ति ''संस्कृतसम्भाषणं महान् विषयः न, शास्त्रज्ञानं इति महान् विषयः । अत्र, तत्र, कुत्र इति सामान्यसम्भाषणेन किम्, शास्त्राध्ययनं कथमिति चिन्तनीयम्'' इति । शास्त्रज्ञानं तु निश्चयेन महान् विषयः । परन्तु इदानीं छात्राणां शास्त्रेषु तलस्पर्शिज्ञानं न भवति चेत् किमर्थं न भवति ? इति चिन्तनीयम् । वस्तुतः अद्यतनच्छात्राणां संस्कृतभाषया भाषणसामर्थ्याभावात् शास्त्रपङ्क्तीनां स्वमनसि उपस्थापनं सरलतया न भवति । अतः शास्त्रच्छात्राणां कृते अपि संस्कृतसम्भाषणम् अत्यन्तम् अनिवार्यम् ।

## आधुनिकभाषा

यावत्पर्यन्तं संस्कृतं 'Classical Language' इति शिरोपट्टिकया भूषितं तिष्ठति अपि च आधुनिकभाषाणां पङ्क्तौ न भवति तावत्पर्यन्तम् इतरभारतीयभाषाभ्यः दीयमानं स्थानं, महत्त्वम्, अनुदानादिकं च संस्कृतेन न प्राप्यते । यदि वयं सर्वे संस्कृतज्ञाः संस्कृतच्छात्राः च सदा संस्कृतेन एव


संस्कृतोत्सवः
स्वागतम्
सभागारः
संस्कृतेनवदतु
नतु संस्कृत विषये

व्यवहरामः तर्हि क्रमशः संस्कृतम् आधुनिकभाषाणाम् आवल्यां प्रविशेत् इति कृत्वा अपि अस्माभिः संस्कृतस्य सांविधानिक-अधिकाराणां प्राप्त्यर्थं रक्षणार्थं च संस्कृतेन सम्भाषणं करणीयम् ।

## उत्कृष्टं साधनम्

संस्कृतसम्भाषणमेव अस्माकम् अन्तिमं लक्ष्यं न । सम्भाषणं प्रथमसोपानमात्रम् । सम्भाषणतः शास्त्रपर्यन्तम् इति अस्माकं अध्ययनमार्गः । सम्भाषणं प्रवेशद्वारम् इव । संस्कृतसम्भाषणम् एकं जनान्दोलनं भवेत् इति अस्माकम् अपेक्षा । संस्कृतभाषायाः सर्वतोमुखविकाससम्पादनकार्ये 'सम्भाषणम्' एकं साधनम् । तत् साधनं बहु प्रबलं साधनम् अस्ति । भारतस्वातन्त्र्यान्दोलने 'चरखा' यथा आसीत् तथा । प्रतिदिनं चरखायन्त्रेण अर्धघण्टां यावत् तन्तुनिर्माणं करोति चेत् देशस्य स्वातन्त्र्यं भविष्यति इति काङ्ग्रेस्नायकाः वदन्ति स्म । परन्तु तत् कथं साध्यम् इति सामान्याः जनाः न अवगच्छन्ति स्म । चरखामाध्यमेन देशे सर्वत्र जनजागरणम् अभवत्, देशाभिमानः निर्मितः च । सम्भाषणमपि चरखासदृशमेकं महत् साधनम् । सम्भाषणमाध्यमेन जनजागरणं कर्तुं शक्यते । सम्भाषणमाध्यमेन संस्कृतस्य पुनरुज्जीवनं शक्यते । सम्भाषणम् इति एषः शब्दः होमियोपथिगुलिका इव । दर्शनेन लघु, परं प्रभावेण महान्, रोगस्य मूलमेव नाशयति । सम्भाषणमिति सरलः शब्दः । परन्तु सम्भाषणं बहु दूरगामिपरिणामं जनयितुं शक्नोति ।

## प्रश्नाः अनेके, उत्तरम् एकम्

सम्भाषणमित्येतद् वस्तुतः संस्कृतस्य 'सञ्जीवनी' अस्ति । सर्वसमस्यानाम् उत्तरं 'संस्कृतेन सम्भाषणम्' । सम्भाषणेन कार्यकर्तॄणां निर्माणं भवति । गतेषु १५-२० वर्षेषु देशे यद् संस्कृतक्षेत्रे नवचैतन्यं दृश्यते तस्य कारणं सम्भाषणमेव । संस्कृतभारत्याः कार्यस्य यशसः एकं रहस्यं सम्भाषणमेव ।

## ब्रह्मास्त्रम्

कस्मिंश्चित् देशे 'अण्वस्त्रम्' अस्ति चेत् न पर्याप्तम् । तस्य प्रक्षेपणाय 'मिसैल्' आवश्यकम् । संस्कृतम् 'अण्वस्त्रम्' इव । सम्भाषणं मिसैल् इव । सम्भाषणद्वारा संस्कृतसन्देशं प्रतिनगरं, प्रतिग्रामं, प्रतिव्यक्तिहृदयं च प्रापयामः । सम्भाषणं भारतीयान् अस्मान् अस्माकम् अतीतेन वैभवेन सह, अस्माकं परम्परया सह च संयोजयति । 'संस्कृतेन सम्भाषणं कुरु, जीवनस्य परिवर्तनं कुरु' इत्ययम् आघोषः बहुभ्यः युवभ्यः प्रेरणामन्त्रः अस्ति । संस्कृतेन सम्भाषणमित्येतद् संस्कृतक्षेत्रे विद्यमानाम् अकर्मण्यतां निर्मूलयितुं ब्रह्मास्त्रम्, जाड्यम् अपसारयितुं रामबाणः च । संस्कृतेन सम्भाषणम् इत्ययम् अस्माकं संस्कृतज्ञानाम् धर्मः । छिन्नायाः संस्कृतमातृभाषिपरम्परायाः नवीकरणकार्यम् एतत् अत्यन्तं पुण्यप्रदम् । यत्र यत्र गच्छामः तत्र तत्र संस्कृतसम्भाषणं नयामः । संस्कृतसम्भाषणयज्ञे स्वजीवनसमिधं समर्पयामः च ।

## अस्माकम् इच्छायाः प्रश्नः

केषाञ्चिद् संस्कृतज्ञानामेव प्रश्नः भवति यद् विपण्यां संस्कृतेन भाष्यते किम् ? अतः संस्कृतसम्भाषणस्य का आवश्यकता ? इति । तद्विषये अस्माकम् एतावदेव कथनं यत् विपण्यां संस्कृतेन न वक्तव्यमिति कुत्रापि नास्ति, वयमिच्छामः चेद् वक्तुं शक्नुमः । आपणिकः कोऽपि संस्कृतेन मा वदतु इति न वदति, यतः तथा वदति चेत् तस्यैव वाणिज्यं न भवति, प्रत्युत सर्वे आपणिकाः ग्राहकस्य भाषाम् अभ्यस्तुम् उत्सहन्ते। अतः संस्कृतसम्भाषणं कुत्र कुत्र इत्येतद् अस्माकम् इच्छाधीनम् । अस्माकम् अभिमानः, संस्कृतानुरागः वा यावान् अधिकः अस्ति तावन्मात्रेण क्षेत्रमपि विशालं भवति ।

केचन संस्कृतज्ञाः भयं प्रदर्शयन्ति यद् संस्कृतेन दैनन्दिनव्यवहारः क्रियते चेत् भाषायाः विकारः भवेत् खलु इति । यावत्पर्यन्तम् अस्माकं संस्कृतस्य संस्कृतत्वस्य रक्षणाय प्रयत्नः प्रामाणिकः तिष्ठति तावत्पर्यन्तं काऽपि क्षतिः न भवेत् । केनचित् जनेन उपहासतया एवम् उक्तं यत्




हे! सः दोषं करोति शुद्धं भाषणीयः!

'यदि केनचिद् कारणेन अपभ्रंशे जाते अपि भवदीयं तद् संस्कृतं ग्रन्थालयेषु मैक्रोफिल्मरूपेण सुरक्षितं भवेदेव खलु ? इति ।

## प्रयत्नः द्रष्टव्यः

'विद्वान् विपश्चिद् दोषज्ञः' इति अमरकोशानुसारं दोषप्रदर्शनमेव पाण्डित्यलक्षणम् इति मन्वानाः बहवः दोषैकदृष्टिमन्तः आसन् इति कारणतः अद्य सर्वे संस्कृतच्छात्राः शिक्षकाः च दोषभयतः भाषणमेव त्यक्तवन्तः । तद् न उचितम् । वस्तुतः दोषः न द्रष्टव्यः, प्रयत्नः द्रष्टव्यः । को वा मानवः १००% शुद्धतया वक्तुं समर्थः?

## कूपखानकन्यायः

व्याकरणमहाभाष्ये पस्पशाह्निके शब्दज्ञानस्य धर्मजनकताधिकरणे असाधुशब्दस्य प्रयोगेण अधर्मोत्पत्तिः भवति वा इति प्रश्नस्य समाधानरूपेण भाष्यकारः वदति - ''अथवा कूपखानकवदेतद्भविष्यति । तद्यथा - कूपखानकः कूपं खनन् यद्यपि मृदा पांशुभिश्चावकीर्णो भवति सोऽप्सु सञ्जातासु तत एव तं गुणमासादयति, येन स च दोषो निर्हण्यते, भूयसा चाभ्युदयेन योगो भवति, एवमिहापि यद्यप्यशब्दज्ञानेऽधर्मः, तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन स च दोषो निर्घानिष्यते, भूयसा चाभ्युदयेन योगो भविष्यति।''

## सम्भाषणम् आद्यं कर्तव्यम्

दोषभयादयः केचन मानसिक-अवरोधाः अद्य संस्कृतस्य प्रयोगे विकासे च हानिकारकाः सन्ति । वस्तुतः अद्य च्छात्रेभ्यः धैर्यदानाय दोषान् कर्तुं प्रोत्साहनं करणीयम् आपतितम् ! संस्कृतसम्भाषणे केषाञ्चित् सङ्कोचः भवति । मम दुर्बलं सम्भाषणं श्रुत्वा अन्ये किं चिन्तयेयुः इति चिन्ता भवति । अहं संस्कृतप्राध्यापकः, कथमहं मम अज्ञतां प्रदर्शयामि इत्यादिरूपेण सङ्कोचः भवति चेत् पक्षं यावत् मासं यावत् वा निर्लज्जः सन् धैर्येण सम्भाषणं करोति चेत् मासाभ्यन्तरे धाराप्रवाहरूपेण भाषणस्य अभ्यासः भवति, तदनन्तरम् आजीवनं गौरवेण भवितुं शक्यते खलु ?



द्विचक्रिकाचालनस्य अभ्याससमये पतनं स्वाभाविकम्। पतनभयेन कोऽपि अभ्यासं न परित्यजति।

अन्यच्च, संस्कृतसम्भाषणस्य लौकिकी आवश्यकता का ? आर्थिकलाभः कः ? पदवृद्धिः तु न भवति । अनिवार्यता अपि काऽपि नास्ति । अतः किमर्थं संस्कृतेन सम्भाषणं करणीयम् ? इति चिन्त्यते चेत् अस्माकं प्रार्थना एतावदेव यद् व्यक्तिगत-लाभालाभयोः प्रश्नः एषः न । संस्कृतस्य लाभस्य प्रश्नः । संस्कृताद् वयं जीवनं प्राप्तवन्तः, संस्कृततः वयं भोजनं कुर्मः । अतः संस्कृतं प्रति अस्माकं कर्तव्यम् अस्ति । संस्कृतोज्जीवनाय संस्कृतसम्भाषणमनिवार्यम् । अतः सम्भाषणीयम् ।

एतस्मिन् अपरे वयसि कः पुनः शिशुरिव सम्भाषणाभ्यासं करोति इति प्रश्नः आयाति चेत् संस्कृतार्थं वयं यत्किमपि कर्तुं सिद्धाः भवेम, एतस्मिन् जन्मनि, जन्मान्तरे, जन्मान्तरेषु वा ।

## मुखम् - सम्भाषणोन्मादः

ह्यः पर्यन्तम् अन्यया भाषया व्यवहारः क्रियते स्म, अद्य पुनः संस्कृतेन सम्भाषणम् इत्युक्ते कृत्रिमता अनुभूयते खलु ? इति चेत् तत्सर्वं दिनं दिनद्वयं वा । येषां हृदयानि संस्कृतार्थं विह्वलयन्ति, येषां मनांसि सदैव संस्कृतार्थं दूयमानानि भवन्ति, ये तावत् संस्कृतप्रचारध्येयोन्मत्ताः तेषां कृते न भयं, न लज्जा, न सङ्कोचः, न वा कृत्रिमता, न श्रान्तिः, न तृप्तिः च । यथा प्रसिद्धः तत्त्वशास्त्रज्ञः सुक्रातो (Socrates) आसीत् सः तत्त्वप्रचाराय प्रतिदिनं विपणिं गत्वा तत्र जनान् आहूय तत्त्वबोधनं करोति स्म । मार्गे यः यः लभ्यते तं तम् उद्दिश्य तत्त्वं बोधयति स्म । अहोरात्रं तत्र तत्र स्थित्वा लब्धं जनम् उद्दिश्य तत्त्वोपदेशं करोति स्म तत्कारणतः सर्वे तम् उन्मत्तः इति वदन्ति स्म । एवं सः तत्त्वप्रचारं कृतवान् । सः अद्य समग्रे विश्वे सर्वेषु विश्वविद्यालयेषु अध्ययनविषयः । सः न कमपि ग्रन्थं रचितवान्, न वा किमपि संस्थानं प्रतिष्ठापितवान् । कथं तर्हि तावान् प्रसिद्धः जातः ? तस्य समीपे कानि साधनानि आसन् ? तस्य एकमेव साधनम् आसीत् । तद् तस्य मुखम् । तस्य मुखस्य पूर्णम् उपयोगं कृतवान् सः । अद्य संस्कृतप्रचाराय अस्माकं सर्वापेक्षया प्रबलतमं साधनं नाम अस्माकं मुखम् । एतेन मुखेन निरन्तरं संस्कृतं भाषणीयम् । सर्वदा

सर्वत्र सर्वैः सह संस्कृतेन सम्भाषणम् । तदा कदाचित् जनाः अस्मान् अपि उन्मत्ताः इति वदेयुः । भवतु नाम, अस्माकम् उन्मादकारणतः संस्कृतमातुः उन्नतिः भवति तर्हि वयम् अवश्यमेव उन्मत्ताः भविष्यामः । न केवलं वयम् उन्मत्ताः भविष्यामः, अपि तु अस्मद्सदृशानां सहस्रशः लक्षशः उन्मत्तानां निर्माणं कुर्मः ।

## अनिवार्यतां कुर्मः

शिशोः मातृभाषायाः अभ्यासे कश्चन विशेषः इत्युक्ते शिशोः बुभुक्षा-पिपासादिकं भवति । तदा मातरं पृच्छति चेदेव किमपि तेन लभ्यते । अर्थात् भाषायाः प्रयोगस्य अनिवार्यता अस्ति । विद्यालयेषु यत्र आङ्ग्लमाध्यमशिक्षणमस्ति तत्र अङ्कप्राप्त्यर्थं च्छात्रस्य आङ्ग्लभाषाप्रयोगस्य अनिवार्यता अस्ति । संस्कृतभाषायाः प्रयोगस्य का अनिवार्यता अस्ति ? अस्माभिः स्वयमेव अनिवार्यता कल्पनीया । संस्कृतहिताय अस्माभिः अनिवार्यत्वं स्वयं स्वीक्रियते चेद् अस्माकमपि अभ्यासः भवति, इतरेषामपि संस्कृतश्रवणसंस्कारः भवति ।

## अस्मत्सदृशानां निर्माणम्

केचन वदन्ति यत् अहम् एकः एव संस्कृतज्ञः अस्मि । केन सह वदामि इति । इदानीम् एकाकी एव अस्ति बहु भवेम इत्येव खलु अस्माकं प्रयत्नः ? सृष्टिकर्तुः भगवतः परब्रह्मणः मनसि अपि सः एव विचारः आगतः आसीत् 'एकोऽहं बहु स्याम' इति । ये अस्मान् परितः सन्ति, संस्कृतानभिज्ञाः अपि सन्तु नाम, तैः सह सम्भाष्य तेषां संस्कृतसम्भाषणशिक्षणं करणीयम् । अस्मत्सदृशानां निर्माणार्थमेव इतरैः सह सम्भाषणम् । १९८१ तमे वर्षे कस्यचित् सम्भाषणशिबिरस्य समारोपे सर्वे शिक्षार्थिनः प्रार्थिताः आसन् यत् सर्वदा सर्वत्र सर्वैः सह संस्कृतेन सम्भाषणं करणीयम् इति । मासानन्तरं काचित् माता पत्रं लिखितवती यत् अहं गृहे परिवारसदस्यैः सह केवलं न, शुनकमार्जारादिभिः सह अपि संस्कृतेन वदामि इति । तस्याः तावान् आग्रहः । कस्यचित् शिबिरस्य

अनन्तरं शिबिरशिक्षकः गृहसम्पकार्थं शिबिरार्थिनां गृहाणि गच्छति स्म । तदा कौचित् छात्रौ समीपवृक्षे स्थितान् वानरान् पश्यन्तौ आस्ताम् । तदा तयोः अन्यतरः वृक्षशाखां कम्पयन्तं वानरमेकं प्रदर्शयन् कथं शाखां कम्पयति इति वर्णनोत्सुकः सन् साभिनयम् उक्तवान् 'रे पश्यतु, सः वानरः वृक्षशाखाम् एवम् एवं करोति' इति । कम्पयतीति क्रियापदम् अजानन् सः अभिनयपूर्वकम् 'एवम् एवम्' इति उक्तवान् । अत्र तस्य बालकस्य संस्कृतेन एव भाषणीयम् इति आग्रहः अस्माभिः अवगन्तव्यः ।

## अनुकूल-वायुमण्डलम्

संस्कृतेन सम्भाषणाय अनुकूलं वातावरणं नास्ति इति केचन अभिप्रयन्ति। वातावरणं नास्ति चेत् वातावरणं निर्मातव्यम् । वातावरणं स्वयं निर्मितं न भवति । ये उद्यमं कुर्वन्ति तैः परिश्रमेण, प्रयत्नेन, उपायेन, साहसेन च अनुकूलता सम्पाद्यते । सर्वत्र अनुकूलता एव चेद् अस्माकं कर्तृत्वस्य उपयोगाय क्व अवसरः ? उत्तमसैनिकाः युद्धस्य प्रतीक्षायां भवन्ति, यतः ते तत्र युद्धे स्वीयं शौर्यं प्रदर्शयितुं शक्नुयुः इति। एवमेव उत्तमकार्यकर्तारः प्रतिकूलतां दृष्ट्वा मम सामर्थ्यं वर्धयितुम् एषः योग्यः अवसरः इति चिन्तयन्ति।

## आरम्भः केवलं कर्तव्यः

सम्भाषणस्य अभ्यासाय पाठनाय च पुस्तकानां ध्वनिमुद्रिकाणां च साहाय्यं भवति चेत् उत्तमम् इति तु सत्यम् । परन्तु तदभावे अपि सम्भाषणं न करणीयम् इति नास्ति । किञ्च बहूनां संस्कृतेन सम्भाषणं करणीयम् इत्यत्र विमतिः नास्ति । परन्तु प्रत्यक्षतः जीवने आचरणे क्लेशः भवति। तत्र केषाञ्चित् आरम्भदोषः । यथा वाहनानां कदाचित् 'स्टार्ट्' न भवति तथा । परन्तु एकवारं वयं 'शैत्यं' परित्यज्य आरम्भं कुर्मः तर्हि अनन्तरं सरलं सवेगं च गच्छेम । केषाञ्चित् तावत् बहुवर्षाणां संस्कारकारणतः अभ्यासबलेन आङ्ग्लभाषाप्रयोगः अथवा मातृभाषाप्रयोगः भवति । तैः अपि एकवारं संस्कृतेन सम्भाषणस्य आरम्भः क्रियते चेत् तत्पश्चात्

धाराप्रवाहरूपेण सहजतया च भाषितुं शक्यते । वयं संस्कृतभाषा सरला, मधुरा इत्यादिरूपेण सुन्दरं भाषणं कुर्मः किल ? तां सरलतां, तां मधुरतां च नित्यव्यवहारे संस्कृतप्रयोगं कृत्वा दर्शयामस्तावत् ! दिनस्य २४ घण्टाः अपि संस्कृतेन जीवनं कृत्वा दर्शयाम ।

## सम्भाषणस्य स्थानं किम् ?

सभा-विवाह-जन्मदिनादि-विशेष-कार्यक्रमान् प्रति, उत्सवान् प्रति वा गमनसमये अस्माभिः विशेषवस्त्राणि आभरणानि च ध्रियन्ते । कार्यक्रमानन्तरं तानि कपाटिकायां स्थाप्यन्ते । अग्रिमकार्यक्रमेषु धारणं, पुनः कपाटिकायां स्थापनं च । तद्वत् संस्कृतसम्भाषणस्य आभरणानां विशेषवस्त्राणां वा स्थानं न भवेत् । यदा यदा सभासम्मेलनादिकार्यक्रमाः तदा संस्कृतसम्भाषणम्, अन्यसमये इतरभाषया सम्भाषणमिति । संस्कृतसम्भाषणम् अस्माकं दैनन्दिनजीवनस्य एकम् अविभाज्यम् अङ्गं भवेत् । इतरभाषाणां विषये अस्माकम् अनास्था उपेक्षा वा नैव । परन्तु संस्कृतभाषा व्यवहारे आनेतव्या इति आग्रहस्य आधिक्यम् ।

## हृदये यदस्ति तदेव जिह्वायामपि

संस्कृतभारत्याः पूर्णकालिककार्यकर्तारः कदाचित् स्वीयं कञ्चित् अनुभवम् उक्तवन्तः । कश्चन पूर्णकालिककार्यकर्ता, तेन सह द्वित्राः स्थानीयाः संस्कृतज्ञाः च एकत्र भवन्ति । तेषु संस्कृतज्ञेषु प्रत्येकम् अपि संस्कृतज्ञः यदा पूर्णकालिकेन सह वार्तालापं करोति तदा संस्कृतेन वदति, मध्ये यदि तत्रैव विद्यमानेन अन्येन संस्कृतज्ञेन सह भाषणीयं तर्हि तादृश-भाषणसमये प्रादेशिकभाषया वदति । एतादृश्यः घटनाः सर्वदा भवन्ति इति न । परन्तु भवन्ति । अत्र एतद् अवगम्यते - तस्य पूर्णकालिककार्यकर्तुः अभिज्ञानं संस्कृतसम्भाषणेन सह अभवत् । अतः तेन सह सर्वे संस्कृतेन एव वदन्ति । इतरेषाम् अभिज्ञानं तु मातृभाषाद्वारा अस्ति । अतः मातृभाषया सम्भाषणं भवति । यदा सर्वे संस्कृतज्ञाः संस्कृतेन सह तादात्म्यताम् अनुभवन्ति, संस्कृतमेव तेषां जीवनं भवति, रक्तस्य प्रतिकणं संस्कृतं

भवति, हृदयसिंहासने संस्कृतमेव प्रतिष्ठितमस्ति तदा अस्माकं मुखतः संस्कृतेन विना अन्यद् किं वा निस्सरेत् ?

## आत्मीयभाषा का ?

कदाचित् एवमपि भवति यत् सामान्यतः संस्कृतेन एव सम्भाषणं भवति । परन्तु अत्यन्तम् आत्मीयसम्भाषणाय मातृभाषायाः प्रयोगः क्रियते, तद्विना मनसः समाधानं न भवति, तृप्तिः न अनुभूयते । अर्थात् संस्कृतं तावत् आत्मीयतमम् इतोऽपि न जातमित्यर्थः ?

काचित् कथा एवमस्ति । विजयनगरसाम्राज्यस्य महाराजस्य श्रीकृष्णदेवरायस्य आस्थानं कश्चन बहुभाषी विद्वान् आगतः । सः सर्वाभिः भारतीयभाषाभिः धाराप्रवाहरूपेण भाषते स्म । तस्य मातृभाषा का इत्येव केऽपि न ज्ञातवन्तः । तदा अन्ते आस्थानविद्वान् तेनालिरामकृष्णः एतद्विषये पृष्टः । सः श्वः वदिष्यामि इति उक्तवान् । तस्यां रात्रौ यदा सः अतिथिविद्वान् निद्राति स्म तदा तेनालिरामकृष्णः दूरतः एव कञ्चित् मण्डूकं तस्य अतिथेः शरीरे त्यक्तवान् । तदा जागरितः सः विद्वान् किमिति अज्ञात्वा भयेन 'अम्मोय्' (बाप रे) (हन्त) इति उच्चैः क्रन्दितवान् । अनन्तरदिने तेनालिरामकृष्णः राजसभायां तस्य विदुषः मातृभाषा तेलुगु इति घोषितवान् । भयसन्तोषादिविशिष्टप्रसङ्गेषु अस्माकं मुखतः मातृभाषा निस्सरति अथवा यया भाषया अस्माकं जीवनस्य अधिकः कालः याप्यते, अथवा यस्यां भाषायाम् अस्माकम् अधिकं प्रभुत्वम् अस्ति, तस्याः भाषायाः प्रयोगं वयं कुर्मः । किं तादृशेषु प्रसङ्गेषु अपि अस्माकं मुखतः यथा संस्कृतमेव निस्सरेत् तथा वयं संस्कृतं रक्तगतं कर्तुं शक्नुयाम ?

## मुखभङ्गः न, व्रतत्यागः अपि न

कश्चन पूर्णकालिककार्यकर्ता संस्कृतकार्यार्थं किञ्चित् नगरं गतवान् । तत्र सः सर्वैः सह संस्कृतेन वदति स्म । तदा कस्मिंश्चित् कार्यक्रमे मिलितवती संस्कृतशिक्षिका अस्माकं कार्यकर्तुः संस्कृतसम्भाषणं दृष्ट्वा सङ्कोचेन विमुखा अभवत् । तदा तत्रैव विद्यमानः कश्चन संस्कृतप्राध्यापकः


श्रवणम्
पठनम्
लेखनम्
भाषणम्

अस्माकं कार्यकर्तारम् उक्तवान् यत् सा संस्कृतेन सम्भाषणं कर्तुं न शक्नोति, अतः तया सह मातृभाषया वदतु, यदा सा वक्तुं समर्था भविष्यति तदा संस्कृतेन वदतु इति । तदा तेन पूर्णकालिकेन उक्तं यत् संस्कृतेन सम्भाषणमित्येतद् अस्माकं व्रतम् । मां पथभ्रष्टं किमर्थं करोति? सा यथा खिन्ना न भवेत् तथा अहं तां निवेदयामि, विनम्रः भवामि, पाण्डित्यं न दर्शयामि च, परन्तु व्रतं न त्यजामि, संस्कृतं तु अस्माकं प्रियतमम् इति ।

## दुराग्रहः नैव

अस्माभिः एषा जागरूकता अपि करणीया यत् संस्कृतेन सम्भाषणम् इति विषयः दुराग्रहस्य वस्तु न भवेत् इति । पुरतः विद्यमानस्य कष्टं, सङ्कोचः, कोपः वा यथा न भवेत् तथा कौशलेन सम्भाषणं करणीयम् । संस्कृतेन सम्भाषणम् इत्यनेन अन्यभाषया न वदामः एव इति प्रतिज्ञा अस्ति इत्यपि न । समयं सन्दर्भं च दृष्ट्वा अस्माभिः अधिकाधिकं संस्कृतेन सम्भाषितुं प्रयतनीयम् । संस्कृतसम्भाषणान्दोलनम् अन्यभाषाविरोधि न । अन्यभाषाणां स्थाने अपि न । अस्माकं व्यवहारतः वचनतः वा कदापि अन्यभाषाविरोधि इति भावना इतरेषु यथा न आगच्छेत् तथा जागरूकता आवश्यकी ।

## अस्माकं प्रभावः वातावरणोपरि

काचित् कथा एवमस्ति - कश्चन कृषकः महिष्याः अस्वास्थ्यनिवारणाय कञ्चित् पशुवैद्यम् औषधं पृष्टवान् । वैद्यः गुलिकाः दत्तवान्, किञ्च उक्तवान् यत् नलिकायां गुलिकाः स्थापयित्वा तां नलिकां महिष्याः मुखे स्थापयित्वा भवान् स्वमुखेन वायुं फूत्करोतु तदा गुलिकाः महिष्याः उदरं गमिष्यन्ति इति । कृषकः अस्तु इति उक्त्वा गतवान् । दिनद्वयानन्तरं सः वैद्यः तं कृषकं मार्गे अस्वस्थरूपेण गच्छन्तं दृष्टवान् । किं सञ्जातमिति पृष्टे सति सः कृषकः उक्तवान् - ''तया नलिकया मया फूत्कारे करणीये ततः पूर्वं महिष्या एव कृतं परिणामतः गुलिकाः मम उदरं गताः ।'' इति । एवमेव कदाचित् ये केचन संस्कृतेन सदा सम्भाषणं

कुर्वन्ति ते अपि क्वचित् वातावरणस्य प्रभावेण इतरभाषया सम्भाषणं कुर्वन्ति । वस्तुतः अस्माभिः वातावरणस्य उपरि प्रभावः करणीयः, न तु वयं बाह्यवातावरणतः प्रभाविताः भवेम ।

## व्यक्तित्वे एव परिवर्तनम्

१९९६ तमे वर्षे पटनानगरे संस्कृतभारत्याः पूर्णकालिककार्यकर्तॄणां मासात्मकं प्रशिक्षणशिबिरम् आसीत् । शिबिरान्ते शिक्षार्थिनः स्वीयान् शिबिरानुभवान् वर्णयन्तः उक्तवन्तः यत् शिबिरमागत्य संस्कृतसम्भाषण-सामर्थ्यसम्पादनमात्रेण आत्मविश्वासः आगतः, धैर्यं प्राप्तम्, इदानीं वयं समाजे सर्वेषां सम्मुखे अभिमानेन स्थातुं शक्नुमः इति । भाषया अभिव्यक्तिकौशल- प्राप्तिमात्रेण तेषां व्यक्तित्वे कीदृशम् अपूर्वं परिवर्तनम् आगतम् ! यदि देशे विद्यमानेभ्यः सर्वेभ्यः लक्षाधिक-संस्कृतच्छात्रेभ्यः अभिव्याक्तिकौशलं दद्मः तर्हि तेषु कीदृशः प्रचण्डः आत्मविश्वासः उत्साहः च जागृयात् ।

## जीवनस्य न्यूनता अस्तङ्गता

१९९७ तमे वर्षे देहल्यां माध्यमिकविद्यालयानां संस्कृतशिक्षकाणां षड्दिनात्मकं प्रशिक्षणं गणशः मासत्रयपर्यन्तं प्राचलत्, यत्र च १३५० शिक्षकाः प्रशिक्षिताः । प्रतिसप्ताहम् अन्ते शिक्षार्थिनाम् अनुभवकथनं भवति स्म । एका शिक्षिका उक्तवती- 'अहं संस्कृतेन Ph.D कृतवती, परन्तु संस्कृतेन सम्भाषणं कर्तुं न जानामि इति कारणतः आत्माहीनभावनाम् अनुभवामि स्म । अत्र केवलं षड्दिनानाम् अभ्यासेन अद्य किञ्चिद् वदामि । तावता एव मम आत्मविश्वासः आगतः इति । अन्या काचित् शिक्षिका- 'अहं विद्यालये संस्कृतविषयस्य शिक्षिका अस्मि चेदपि गृहे, सम्बन्धिनां मध्ये वा परिचयसमये अहं आत्मानं Language Teacher इति परिचाययामि स्म, न तु कदापि संस्कृतशिक्षिका इति । कारणं तु अहं संस्कृतं सम्यक् न जानामि, वक्तुं न शक्नोमि इति सङ्कोचः आसीत् । परन्तु इदानीं सम्भाषणाभ्यासानन्तरम् अहम् आत्मनि गर्वम् अनुभवामि ।

इतःपरं तु अहं सधैर्यं साभिमानं च संस्कृतशिक्षिका इति स्वस्य परिचयं वदामि' इति । अन्यः शिक्षकः उक्तवान् - 'अहं द्वादशवर्षाणि संस्कृतं पठितवान् । पुनः विंशतिवर्षेभ्यः संस्कृतं पाठयन् अस्मि । तथापि संस्कृतेन भाषणं कर्तुं न शक्नोमि स्म, यद्यपि संस्कृतभाषा सरलाभाषा इति अहं तत्र तत्र भाषणं करोमि स्म तथाऽपि मम अन्तरङ्गं वदति स्म संस्कृतं कठिनतमम् इति यतः अहं संस्कृतेन वक्तुं न शक्नोमि स्म इति । परम् इदानीं चिन्तयामि संस्कृतेन सम्भाषणम् इत्युक्ते तादृशं कठिनं किमपि न, किञ्चित् अभ्यासमात्रम् अपेक्षितम् इति । अपरः शिक्षकः उक्तवान् 'यदि मम च्छात्रदशायां मया एतादृशं सम्भाषणप्रशिक्षणं प्राप्तम् अभविष्यत् तर्हि अहम् एतावता बहु असाधयिष्यम्' । अंशद्वयं तु सर्वे अपि शिक्षकाः समानतया उक्तवन्तः - तद्यथा- (१) अस्माकं गुरवः अस्मान् संस्कृतसम्भाषणम् अपाठयित्वा, अस्माभिः सह संस्कृतेन अव्यवहृत्य अस्मभ्यम् अन्याय्यं कृतवन्तः, तेन संस्कृतभाषया अभिव्यक्तिसामर्थ्यतः वयं वञ्चिताः अभवाम । (२) संस्कृतसम्भाषणसामर्थ्याभावतः स्वजीवने काचित् अपूर्णता न्यूनता च अनुभूयते स्म, मनसि पीडा भवति स्म, इदानीं जीवने प्रथमवारं संस्कृतज्ञः इति सार्थक्यं तृप्तिं च अनुभवामः इति ।

## वाग्देव्याः उपासना

संस्कृतभाषायाः अन्यत् नाम सुरसरस्वती इति । सरस्वत्याः अपरं नाम वाग्देवी इति । वाग्देव्याः पूजा कथं करणीया ? पुष्पैः अर्चनां कृत्वा, नीराजनं कृत्वा किम् ? नैव वाग्देव्याः पूजा वचसा एव करणीया । अतः संस्कृतेन सम्भाषणम् इत्युक्ते वाग्देव्याः उपासना, सुरसरस्वत्याः समाराधनम् । संस्कृतेन सम्भाषणमिति एतत् अस्माकं व्रतम् ।

केचन वयोवृद्धाः पण्डिताः अद्यापि भोजनसमये संस्कृतेन एव भाषमाणाः दृश्यन्ते । तेषां तादृशः आग्रहः । एतेन एव प्रकारेण दिनस्य कमपि समयं निश्चित्य तदा संस्कृतेन भाषणमिति, गृहे संस्कृतेन इति, कक्ष्यायां संस्कृतेन इति, संस्कृतज्ञैः सह संस्कृतेन इति वा अस्माभिः किञ्चित् व्रतं पालनीयम् ।

## भाषिता भवेत्

वाराणस्यां सार्वभौमसंस्कृप्रचारकार्यालयस्य श्री वासुदेवद्विवेदी-शास्त्रिभिः संस्कृतसम्भाषणप्रचाराय कियद् कार्यं कृतम् । तेषां प्रसिद्धः श्लोकः एवम् अस्ति -

'भवद्भिः यन्मुखेनैव
'आओ जाओ' निगद्यते ।
आगच्छ, गच्छेति कथं
तन्मुखेनैव नोच्यते ?

वस्तुतः उपरितनस्य श्लोकस्य बहु महत्त्वम् अस्ति । अस्माभिः आदिनं संस्कृतेन सम्भाषणं न कृतं चेदपि मध्ये मध्ये कतिचन लघुवाक्यानि शब्दाः वा संस्कृतेन प्रयुक्ताः चेदपि तस्य महान् प्रभावः भवति । एतादृशप्रयोगान् श्रुत्वा श्रोतुः अनवगमनस्य प्रश्नः न भवति । केवलम् अस्माकम् आग्रहस्य प्रश्नः । आरम्भे प्रयत्नेन संस्कृतसम्भाषणं भवति, अनन्तरं तावद् तद् अस्माकं स्वभावः भवेत् । मध्ये मध्ये संस्कृतवाक्यानां प्रयोगेण तदस्माकं संस्कृतज्ञत्वं ज्ञापयति, संस्कृताय यद् करणीयमस्ति तत् कर्तव्यं स्मारयति च । अतः संस्कृतेन सम्भाषणमित्येतद् अस्माकं ध्येयप्रखरतारक्षणे साहाय्यं करोति ।

## समाजे प्रतिष्ठा

अद्यत्वे शिक्षितजनानां मेलने सभायां वा भाषणकर्ता स्वीये भाषणे संस्कृतश्लोकानाम् उक्तीनां वा उल्लेखं करोति । किमर्थम् ? एतदर्थं यत् संस्कृतश्लोकानां कथनेन 'सः महान् विद्वान्' इति जनाः चिन्तयन्ति । संस्कृतभाषायाः विद्वत्तायाः च सम्बन्धः । अतः संस्कृत-उल्लेखेन सः प्रतिष्ठां प्राप्नोति । संस्कृतसम्भाषणस्य अपि सा एव कथा । वयम् अनुभवामः यत् अस्माकं सामान्याः अपि कार्यकर्तारः संस्कृतेन भाषन्ते इति एतावन्मात्रेण ते दिनाभ्यन्तरे एव समाजे पूज्याः भवन्ति । तस्य कार्यकर्तुः विषये जनानाम् आदरः अधिकः भवति । कार्यकर्ता कदाचित्

किमपि कार्यं साधयितुं कश्चित् कार्यालयं गतः सन् तत्र कार्यं न सम्पद्यते इति यदा भासते तदा संस्कृतेन सम्भाषणस्य आरम्भं करोति । तेन अनुक्षणं कार्यं सम्पन्नं भवति । संस्कृतभाषायाः तादृशः महिमा । अद्यापि जनहृदयेषु संस्कृतविषये तादृशी श्रद्धा भक्तिः च । कश्चन युवा कार्यकर्ता 'विजय बैंक' इत्यस्य अध्यक्षेण मेलितुं गतवान् सम्भाषणसन्देशार्थं विज्ञापनसङ्ग्रहाय । तस्य अध्यक्षमहोदयस्य अनुकूलप्रतिक्रिया न दृष्टा । अस्माकं कार्यकर्ता यावत् संस्कृतेन सम्भाषणम् आरब्धवान् तावत् सः अध्यक्षः स्वेन क्रियमाणं कार्यं परित्यज्य तदीयान् त्रीन् महाप्रबन्धकान् आहूय तैः सह एतस्य कार्यकर्तुः सम्भाषणं श्रोतुम् उपविष्टवान्, विलम्बेन विना पत्रिकायै विज्ञापनां च दत्तवान् । एतादृशानि उदाहरणानि, कथाः च असङ्ख्याः सन्ति, प्रतिदिनं जायमानाः सन्ति यत्र संस्कृतसम्भाषणद्वारा कार्याणि जातानि इति । वयं संस्कृतज्ञाः समाजे संस्कृतविषये श्रद्धा नास्ति, कोऽपि संस्कृतं न पुरस्करोति इति रोदनं कुर्मः । वस्तुतः समाजे संस्कृतविषयिणी श्रद्धा, आदरः वा तथैव अस्ति, सुप्तः अस्ति । अस्माभिः सम्भाषणद्वारा सः आदरः जागरणीयः, तावदेव । संस्कृतज्ञेषु श्रद्धा, आदरः च न्यूनः जातः, यतः संस्कृतज्ञाः एव संस्कृतं न पुरस्कुर्वन्ति ; संस्कृतज्ञाः एव संस्कृतव्यवहाररहिताः सन्तः संस्कृतं परित्यक्तवन्तः इति । अतः संस्कृतज्ञेन आदरः प्रतिष्ठा च प्राप्तव्या चेत् तेन संस्कृतेन सम्भाषणम् आरब्धव्यम् ।

## वयोवृद्धानाम् आशोदयः

पूर्वं बेङ्गलूरुनगरे शाङ्करपुरम् इत्यत्र संस्कृतसम्भाषण- आन्दोलनस्य कार्यालयः आसीत् । कार्यारम्भानन्तरं चत्वारि वर्षाणि अतीतानि आसन् । शङ्करपुरे रङ्गरावमार्गः इति कश्चन मार्गः । तस्मिन् मार्गे कश्चन सुप्रसिद्धः वयोवृद्धः वैयाकरणः निवसति । १९८५ तमं वर्षम् । सः वैयाकरणः स्वगृहस्य द्वारे तिष्ठन् आसीत् । मार्गे सहजतया आनन्देन च संस्कृतेन संलपन्त्यः चतस्रः बालिकाः गच्छन्त्यः आसन् । ताः दृष्ट्वा सः वृद्धः वैयाकरणः कुतूहलेन ताः सम्यक् परिशीलतवान् । तासां संस्कृतवार्तालापेन

प्रभावितः सः ताः पृष्ट्वा तासां परिचयं प्राप्तवान् । ताः बालिकाः न व्याकरणं पठितवत्यः, न वा काव्यं किमपि । परन्तु सम्भाषणशिबिर-साप्ताहिकमेलनादिषु भागं गृहीत्वा ताः सम्यक्प्रकारेण संस्कृतेन भाषन्ते स्म । आश्चर्यचकितः सः विद्वान् अनुक्षणमेव तस्मिन् एव मार्गे विद्यमानं संस्कृतभारत्याः कार्यालयम् आगत्य तत्रत्यान् कार्यकर्तॄन् उक्तवान्- भवन्तः समीचीनं संस्कृतप्रचारकार्यं कुर्वन्ति इति तावदेव चिन्तयामि स्म, भवद्विषये ततोऽप्यधिकं ज्ञातुं न उत्सहे स्म । परन्तु अद्य भवतां शिष्याः मया दृष्टाः । अनधीतसंस्कृतानामपि तासां सुष्ठु सम्भाषणं दृष्ट्वा अहं न केवलं भवतां कार्यविषये समाहितः, अपि तु संस्कृतसम्भाषणान्दोलनस्य युवकार्यकर्तॄन् दृष्ट्वा अहं मम जीवनस्य सन्ध्याकाले इदानीं निश्चिन्तः जातः, इति । एतेन प्रकारेण सम्भाषणद्वारा ज्येष्ठाः पण्डिताः अपि आनन्दिताः भवन्ति ।

## जनान्दोलनम्

केचन पृच्छन्ति- ग्रामजनानां सामान्यानां जनानां च संस्कृतसम्भाषणे किमर्थं रुचिः भवेत् इति । नवतितमे वर्षे कर्णाटकस्य दक्षिणकन्नड जनपदे कुन्दापुरम् इति उपमण्डले (तालूकामध्ये) १०१ ग्रामेषु आहत्य १८५ सम्भाषणशिबिराणि कृतानि, समारोपे दिनात्मके कार्यक्रमे ८६५० जनाः सम्भाषणसमर्थाः उपस्थिताः आसन् । १९९४ तमे वर्षे शिरसि इति मण्डले विद्यमानेषु १२०० ग्रामेषु शिबिराणि कृतानि, समारोपे दिनात्मके कार्यक्रमे संस्कृतसम्भाषणानन्दास्वादकाः ३०,००० जनाः आसन्, १९९५ वर्षे देहलीनगरे एव १००८ सम्भाषणशिबिराणि कृतानि, समारोपसभायां तालकटोरा-उद्याने ३५,०००जनाः आगतवन्तः । किम् एतादृशैः उदाहरणैः एतद् न ज्ञायते यत् संस्कृतमपि सर्वजनहृदयं स्पृशति, जनान्दोलनं भवितुं शक्नोति इति ?

## अनितरसाधारणी रुचिः

उपरितनेषु अभियानेषु वयं सामान्यजनानां निवासक्षेत्रेषु, उपेक्षितक्षेत्रेषु, मलिनबस्ती इति कथ्यमानक्षेत्रेषु च सम्भाषणशिबिराणि कृतवन्तः ।

तत्रत्यशिबिराणि अत्यन्तं यशस्वीनि भवन्ति स्म । यतः तत्रत्यजनानां संस्कृतश्रद्धा असदृशी भवति स्म । संस्कृतभाषायाः धर्मेण संस्कृत्याः च सह सम्बन्धः इति कारणतः संस्कृतेन सम्भाषणसामर्थ्यसम्पादनं नाम आत्मनः विकासः, आत्मगौरवम् इति ते चिन्तयन्ति स्म । अतः तेषां तु संस्कृते अनितरसाधारणी रुचिः भवति ।

## हिब्रू - उदाहरणम्

इस्त्रैल् देशे हिब्रूभाषा २३०० वर्षाणि यावत् मृतभाषा आसीत् । रोमसैन्यस्य आक्रमणेन त्रस्ताः येहूदीयाः विश्वे विकीर्णाः सन्तः स्वमातृभाषां हिब्रू परित्यज्य तत्तद्देशभाषाम् आश्रितवन्तः स्वशिशूनां वर्धनाय । इस्त्रैलमध्ये अवशिष्टाः ये केचन आसन् ते अपि तत्र इङ्ग्लिष् इत्यादि-अपभ्रंशभाषाः आश्रितवन्तः । परिणामतः हिब्रू दैनन्दिनिकव्यवहारतः लुप्ता सती १) मन्दिरेषु प्रार्थनासभासु धार्मिकचर्चासु च प्रयुज्यते स्म (यथा अत्र संस्कृतं कर्मकाण्डे प्रयुज्यते) २) पौराणिकधार्मिक-विषयेषु ग्रन्थरचनायां च प्रयुज्यते स्म (यथा अत्र शास्त्रीयविषयेषु प्राक्तनविषयेषु च ग्रन्थाः रच्यन्ते) ३) लौकिकविषयाणां व्यवहारार्थम् उपयुक्ता चेत् पापम् इति भावना (अत्र तु दोषाः न कर्तव्याः इत्यादि) ४) देवदूतभाषा (Tongue of the Prophets) इति प्रसिद्धा जाता (यथा अत्र देवभाषा इति) ।

तादृशस्थितौ इस्त्रैल्स्वातन्त्र्यतः (१९४८ तमे वर्षे स्वातन्त्र्यम्) बहु पूर्वमेव, सामान्यतः १८८० तमे वर्षे एव हिब्रूभाषया सम्भाषणद्वारा हिब्रू पुनरुज्जीवन-आन्दोलनम् आरब्धम् । १९२५ तमवर्षपर्यन्तं हिब्रूभाषा सम्पूर्णरूपेण व्यवहारभाषा जाता आसीत्, तदानीन्तनेन तत्रत्येन टर्कशासनेन हिब्रू व्यवहारभाषा इति घोषिता अपि आसीत् ।

४५ वर्षेषु नवेतिहासः रचितः । कैः ? तत्रत्यैः हिब्रूशिक्षकैः । केन माध्यमेन ? सम्भाषणमाध्यमेन । साधनानि कानि ? स्वीयमुखानि केवलम् । कार्यक्रमाः के ? हिब्रू-सम्भाषणकक्ष्याः, हिब्रूगृहाणि, हिब्रूमाध्यमेन हिब्रूपाठनम्, हिब्रूमाध्यमशिशुवाटिका, शब्दशाला इत्यादयः। किं मूल्यं

दत्तवन्तः ? ते स्वजीवनस्यैव मूल्यं दत्तवन्तः । तैः हिब्रूशिक्षकैः किं किं सोढम् हिब्रूव्यवहाराय ? सरलं प्रादेशिकभाषया भाषणम् इति गृहे हिब्रूविषये असहकारः, दैनन्दिनिकसम्भाषणं कृत्वा अधर्मम् आचरन्ति इति समाजे बहिष्कारः, शुनकदंशनं, कदाचित् ताडनानि च, हिब्रूमाध्यमेन पाठयित्वा नियमोल्लङ्घनं कृतम् इति विद्यालयतः निष्कासनम्, भाषा अपवित्रीकृता इति न्यायालये अभियोगः कारगृहवासः च । एतावत् न पर्याप्तम् इति हिब्रूभाषायाम् आधुनिकविषयान् अभिव्यक्तीकर्तुं शब्दानाम् अभावः । अतः तदर्थम् अध्ययनं, चिन्तनं, पुस्तकप्रकाशनञ्च । मरुभूमौ ग्रामं ग्रामं गत्वा हिब्रूसम्भाषणवर्गाणाम् आयोजनम् । एवं कृत्वा ते धीराः येहूदीयाः शिक्षकाः हिब्रूसम्भाषणमाध्यमेन हिब्रूभाषां पुनरपि व्यवहारभाषां कृतवन्तः। चमत्कारं कृत्वा दर्शितवन्तः ।

## के अपेक्षिताः ?

अद्य भारते संस्कृतसम्भाषणसमर्थाः कतिचन लक्षजनाः स्युः परन्तु तेन किं प्रयोजनम् ? अद्य अपेक्षिताः संस्कृतसम्भाषणशीलाः । ये संस्कृतसम्भाषणेन जीवनसार्थक्यम् अनुभवन्ति तादृशानां संस्कृतसम्भाषण-ज्वरपीडितानां कृते संस्कृतमाता प्रतीक्ष्यमाणा अस्ति ।

अस्माकं भाषणं संस्कृतेन, सम्भाषणं संस्कृतेन, वादः संस्कृतेन, संवादः संस्कृतेन, विवादः संस्कृतेन, आलापः संस्कृतेन, विलापः संस्कृतेन वार्तालापः संस्कृतेन । तथा च निद्रायां स्वप्नोऽपि संस्कृतेन भवेत् । श्वासः संस्कृतेन, निःश्वासः संस्कृतेन । श्वासः संस्कृताय, निःश्वासः संस्कृताय ।

कश्चन ज्यौतिषिकः आसीत् । सः यद्यद् भविष्यं वदति स्म तद् सर्वं सत्यमेव भवति स्म । कश्चन युवा तस्य ज्यौतिषिकस्य परीक्षां कर्तुं हस्ते किञ्चित् गृहीत्वा ज्यौतिषिकस्य सम्मुखे स्थित्वा 'मम हस्ते किम् अस्ति' इति पृष्टवान् ।

ज्यौतिषिकः उक्तवान् - 'पक्षी'

युवकः - पक्षी उत पक्षिणी ?

ज्यौतिषिकः - 'पक्षी'

सत्यमम् एवम् आसीत् । एकः लघु पक्षिशिशुः आसीत् ।

युवकः - पक्षिणः वर्णः कः ?

ज्यौतिषिकः - 'कृष्णः'

तदपि सत्यमासीत् । तं जेतुम् आगत्य इदानीम् अहमेव पराजितः भवेयं वा इति भयेन कश्चित् उपायं कृत्वा युवकः पृच्छति - पक्षी जीवति उत मृतः ?

युवकः चिन्तितवान् आसीत् यदि मृतः इति वदति, तर्हि हस्तम् उन्मोचयामि, तदा पक्षी उड्डयते, तस्य वचनम् असत्यं भवति । पक्षी जीवति इति वदति चेत् हस्तेन पक्षिणं किञ्चित् मर्दयित्वा तं मारयित्वा मृतं दर्शयामि, तदापि ज्यौतिषिकस्य वचनम् असत्यं भवति । इदानीं ज्योतिषिकेण किं वा वक्तव्यम् ? शान्तमनस्कः सन् वदति 'तद् भवतः हस्ते अस्ति ।'

एतेन एव प्रकारेण संस्कृतस्य जीवनं मरणं च अस्माकं हस्तेषु अस्ति ।

।। वदतु संस्कृतम्, जयतु भारतम् ।।

